वैद्यवरश्रीकेशवविरचितैः

# सिद्धमन्त्रः

महामहोपाध्यायश्रीवोपदेवविरचितया
सिद्धमन्त्रप्रकाशाख्यव्याख्यया
समुल्लसितः

तथा

श्रीनारायणभिषग्विरचितः स्वकृतव्याख्यासहितः

# वातमत्वादिनिर्णयः

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा संशोधित

पण्डितश्रीज्येष्ठाराम मुकुन्दजी शर्मणा
मुम्बय्यां
सुवर्णाख्यमुद्रायन्त्रे मुद्रयित्वा प्राकाश्यं नीतः
मुद्रक. ' आपटे ' इत्युपाह्वः शंकरात्मज हरि शर्मा

संवत १९६६ - सन - १९०९

मूल्यं एको रूप्यकः ।

पुस्तकमिदं मुंबई - कालकादेवी - रोड - छपेरवागस्थाने
ज्येष्ठाराम मुकुन्दजी शर्मणः पुस्तकालयात् लभ्यते ॥

# समर्पणम् ।

## पुस्तकमिदं

श्रीमत्सौराष्ट्रजनपदातःपातिजीर्णदुर्गनिवासिभ्यो विविधविज्ञानविलसितविचारचारुभ्य. श्रीप्रश्नोरानागरावतंसेभ्यः परलोकप्रणयिभ्यः इन्द्रजीतनुजनुभ्यः श्रीभगवाँल्लालशर्मभ्यः पी. एच् डी. इति बिरुदधारिभ्यः समर्प्यते सादरं तच्चरणपरिचरणलब्धविद्याविद्येन पुष्करणाज्ञातीयेन नथुजीतनुजेन मुरारिशर्मणा प्रेमभरेणेति ॥

श्रीमुंबई होलिचकलामार्गः । पौषशुक्ले १५<br>बुधवासरे<br>संवत् १९६५ शाके १८३०

सद्गुणिवशंवदः<br>मुरारिशर्मा वैद्यः

# विज्ञापनम् ।

अयं सिद्धमन्त्रनामा ग्रन्थः वैद्यवरश्रीकेशवविरचितः, व्याकरणायुर्वेदाद्यनेकशास्त्रावगाहनगम्भीरमतिना तत्पुत्रेण श्रीवोपदेवेन विरचितया सिद्धमन्त्रप्रकाशाख्यव्याख्यया समुल्लसितो भिषजामल्पेनायासेन द्रव्यशक्तिनिर्णयेऽद्वितीयो वर्तते । सिद्धमन्त्रप्रणेता श्रीकेशवः तत्पुत्रः श्रीवोपदेवश्च कस्मिन् समये कस्मिन् काले कतमं जनपदं जन्मनाऽलंचकारेत्येतद्विषये तद्विरचितग्रन्थेभ्यो यदितिवृत्तमुपलब्धं तदिह संगृह्य प्रदर्श्यते । श्रीकेशवः विदर्भ ( वह्राड ) देशान्तर्गतवरदा ( वर्धा ) नदीतीरस्थवेदपदाख्यग्रामनिवासी, महादेवपुत्रः, भास्कराख्यभिषजोऽधीतायुर्वेदशास्त्रः, दण्डकमहाराजश्रीसिंहराजतो लब्धसन्मानः, जातितो विप्रश्च बभव । श्रीवोपदेवस्तु तत्पुत्रः, धनेशाख्यविदुषोऽधीतविद्यः, देवगिरिस्थयादववंशीयमहाराजश्रीमहादेवचक्रवर्तिनो धर्माधिकरणमन्त्रिणः श्रीहेमाद्रेः सभापण्डितश्चासीत् । सोऽयं वोपदेवः पक्षवसुधरेन्दुमिते ११८२ शकसंवत्सरे समजनिष्टेतीतिहासविदां मतम् । १ कविकल्पद्रु-

१ तथा च वोपदेवविरचितशतश्लोक्यां एकोनविंशत्यधिकशततमः श्लोकः,– "देशाना वरदातट वरमत सार्थाभिधानं महास्थानं वेदपदास्पदाप्रजगणाग्रण्य सहस्रं द्विजाः । तत्रामीषु धनेशकेशवविदौ वैद्यौ वरिष्ठो क्रमाच्चके शिष्यसुतस्तयो कृतिमिमां श्रीवोपदेवः कविः–" इति ।

२ तथाच सिद्धमन्त्रस्यान्तिमश्लोकः, " लेभे जन्म महादेवादायुर्वेदं च भास्करात् । सन्मानं सिंहराजाच्च केशवः कारकोऽस्य स "–इति ।

३ देवगिरिनगरं सम्प्रति निझामराज्यान्तर्गतं 'दौलताबाद' इति नाम्ना प्रसिद्धम् ।

४ तथा च हरिलीलायां प्रथमश्लोके वोपदेवः,–"श्रीमद्भागवतस्कन्धाध्यायार्थादि निरूप्यते । विदुषा वोपदेवेन मन्त्रिहेमाद्रितुष्टये '— इति ।

५ यदाह चतुर्वर्गचिन्तामणेर्दानखण्डप्रस्तावनायां श्रीभरतचन्द्रशिरोमणिः,– "हेमाद्रिस्तु देवगिरिस्थयादववंशमहाराजाधिराजमहादेवचक्रवर्तिनो राज्ञो म-

माख्यो धातुपाठः, २ कविकामधेन्वाख्या कविकल्पद्रुमव्याख्या, ३ त्रिंशच्छ्लोकी ( अशौचनिर्णय. ), ४ धातुकोश, ५ परमहंसप्रिया, ६ परशुराममतापदीपिका ( श्राद्धकाण्डः ), ७ मुक्ताफलः, ८ मुग्धबोधव्याकरण, ९ रामव्याकरण, १० शार्ङ्गधरसंहितागूढार्थदीपिका, ११ सिद्धमन्त्रप्रकाशः, १२ हरिलीला, १३ हृदयदीपनिघण्टुः, १४ पदार्थादर्शश्च एते ग्रन्था बोपदेवविरचिता इति डॉ० औफ्रेख्ट् महोदयः। तेभ्यो मुग्धबोधव्याकरणं, शतश्लोकी, कविकल्पद्रुम, हरिलीला च एते ग्रन्थाः मुद्रिता । कैलासवासिभि श्रीयुतपण्डित ' भगवाँल्लाल इन्द्रजी' पी एच् डी. इतिविरुदधारिभि , ज्योतिर्विच्छ्रीहरिकृष्णवेंकटराम-इत्येषां संग्रहालयस्थमेकं सटीकं सिद्धमन्त्रपुस्तकमवलम्ब्य मुद्रापणेच्छया स्वहस्तेनैव सिद्धमन्त्रपुस्तकं लिखितं, परन्तु दैववशात्ते पुस्तकममुद्रयित्वैव उपरमन्त। तत्पुस्तकं तच्छिष्यैः परममाननीयैः "वैद्य श्रीमुरारजी नथुजी"इत्येतैः संशोधनार्थं मह्यं समर्पितं मया च यथामति संशोधितम्। वातप्रत्वादिनिर्णयस्तु यदा सिद्धमन्त्र-मुद्रणमारब्धं तदैव कार्यवशान्मुम्बापुरीमागतवद्भि अस्मदस्मद्गुरुभिः जयपुरराजकीयसंस्कृतमहाविद्यालये आयुर्वेदप्रधानाध्यापकैः आयुर्वेदाचार्यश्रीलक्ष्मीरामस्वामीमहोदयै सिद्धमन्त्रसदृशः तदपेक्षयाऽप्यतिविशदतयानिर्णीतद्रव्यशक्तिकथनेन सिद्धमन्त्रेण

---

र्माधिकरणपण्डित आसीत्। हेमाद्रिरपि तस्य नृपतेः, यस्य सभापण्डितो महामहोपाध्याय श्रीबोपदेव आसीत् । अनुमीयते पक्षवसुधरेन्दु मिते शकसंवत्सरे हेमाद्रिवत्सरान्न्यूनाधिपत्येन समभवदिद, हेमाद्रिरपि तदैव समुदयं लेभे च " इति ।

सहैव मुद्रणार्थं समर्पितः । अस्माभिः सिद्धमन्त्रेण महैव मुद्रापितश्च । मुद्रणदोषात् भ्रमप्रमादवशाद्वा यान्यशुद्धान्युपलभ्येरन् तानि गुणैकपक्षपातिभिर्विद्वद्भिः संशोधयितव्यानि क्षन्तव्यश्चाहं, सफलीकर्तव्यश्च ममायं प्रयासः ग्रन्थस्यास्य पठनपाठनपर्यालोचनादिनेति शम् ॥

वैद्ययादवशर्मणः ।

# सिद्धमन्त्रान्तर्गतविषयानुक्रमणिका ।

# वातघ्नत्वादिनिर्णयान्तर्गतविषयानुक्रमणिका ।

# शुद्धिपत्रम् ।

| अशुद्धपाठः । | शुद्धपाठः । | पृ० | पं० |
|---|---|---|---|
| रसवीर्यविवेकपूर्वको | रसवीर्यविपाकविवेकपूर्वको | १ | २२ |
| तत्तु | ननु | ४ | १६ |
| वाऽवस्थायामनुपयुक्तं | वाऽवस्थायामुपयुक्त | ८ | ३ |
| चैव | नैम्बं | ९ | ११ |
| वातपित्तललाल्पश्लेष्मलादयः | वातघ्नापित्तलाल्पश्लेष्मादयः | १२ | २५ |
| वातपित्तलश्लेष्मोदासीन | वातश्लेष्मलापित्तोदासीन | १३ | २७ |
| पृष्टस्याहतस्य | भृष्टस्याहृतस्य | १५ | १८ |
| स्मृतस्तन्यस्तु | स्मृतस्तन्मस्तु | ,, | २४ |
| तिलकाम्बालकयो- | तिलखलतिलकाम्बलिकयोः . | १७ | २ |
| फल्गु वातकफ | फल्गवातकफं | २३ | २४ |
| पित्तकृद्द्रोणपुष्पी चापि | पित्तचलकृद्द्रोणपुष्पी | २६ | १८ |
| कफकृत् | कफहृत् | २७ | ८ |
| अश्वछन्दा | अश्वकन्दकौ | ३८ | २ |
| द्वितीयस्तु दवोद्भवो | द्वितीयस्तूदकोद्भूतो | ,, | ६ |
| कोचपुष्पकरे | चोरपुष्करे | ३७ | २ |
| प्रावतरुः | स्रुवतरुः | ४४ | ११ |
| ( तेषा | तेषा | ६४ | ११ |
| ) तेषा | ( तेषा | ,, | १३ |
| तेषां · | ) तेषां | ,, | १५ |
| तत्पित्तकृद्यथा | तत्पित्तहृद्यथा | ७२ | १५ |
| श्लेष्महर पित्तमरद्भवेत् | श्लेष्महरापित्तमरद्भवत् | ७५ | १५ |

श्रीः

सिद्धमन्त्रप्रकाशाख्यव्याख्यया समल्लसितं

# सिद्धमन्त्रः

आयुर्वेदसुधाम्भोधिसारसारणिका गिरः।
उल्लासितौषधग्रामा जयन्त्यमृतजन्मनः ॥ १ ॥

आरोग्यवैद्यनाथाभ्यां नमः सत्यादिसद्मना ॥
मातापितृभ्यां दातृभ्यामायुः सुखहितामृतम् ॥ १ ॥
येनोच्चारितमात्रेण पुरः स्फुरति भेषजम् ॥
सोयं चिकित्सकप्रीत्यै सिद्धमन्त्रः प्रकाश्यते ॥२॥

ग्रन्थारम्भे ग्रन्थकृदभीष्टसिद्धये स्वेष्टदेवतामभिष्टौति—आयुर्वेदेत्यादि । जयन्ति सर्वोत्कर्षेण वर्तन्ते। काः? गिरः वाचः। कस्य अमृतजन्मनः, अमृतं पीयूषं जन्म उत्पत्तिस्थानं यस्य स अमृतजन्मा तस्य; अमृताज्जन्मेति वा । अमृतजन्मशब्देन धन्वन्तरिः, सुरासुरैर्मथ्यमानस्यामृतसमुद्रस्य गर्भादमृतकलशमादाय धन्वतरिरूपेण परमेश्वरः प्रादुर्बभूवेतीह श्रूयते । कथंभूता गिरः? आयुरित्यादि । आयुर्वेद एव सुधाम्भोधि अमृतसमुद्रस्तस्य सारो मन्थनादवाप्त इत्यर्थः; स चायुर्वेदपक्षेऽभिधेयविशेषः, सुधाम्भोधिपक्षे सुधा, तस्य सारणिकाः सार्यन्ते केदारं प्रति पानीयमाभिरिति सारिण्यः कुल्येति प्रसिद्धाः, स्वार्थे कप्रत्ययः, गीर्भिः प्रतिपुरुषमायुर्वेद आनीयते। श्लेषेण रूपकं निर्वहति—उल्लासितौषधग्रामा इति। तत्र गीःपक्षे औषधानि रोगघ्नाः पदार्थाः, एषां ग्रामः समूहः, उल्लासितः प्रकटीकृतः औषधग्रामः आभिरिति, सारणिकापक्षे औ-

षधयः फलपाकान्तास्तासां समूह औषधं, 'तस्य समूह' इत्यण्, ग्रामः पत्तनादयः, उल्लासितं पत्रपुष्पादिसम्पत्त्या रम्यतां नीतं औषधं येषु ग्रामेषु ताभिरिति उल्लासितौषधग्रामाः। 'औषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम्' इत्यौषध्यौषधशब्दयोर्विशेषः। आयुर्वेदोपदेशप्रशमितसमस्तातङ्को धन्वन्तरिरेव सर्वोत्कर्षेण वर्तत इति वाक्यार्थः ॥ १ ॥

ग्रन्थस्संग्रथ्यतेऽत्यल्पः सिद्धमन्त्राह्वयो मया ॥
वैद्याः सुखेन द्राग् द्रव्यशक्तितत्त्वं विदन्त्वतः॥२॥

अथ सप्रयोजनमभिधेयमभिधत्ते-ग्रन्थ इत्यादि। संग्रथ्यते सम्यक् विरच्यते। केन? मया। कः? ग्रन्थः प्रबन्धः। कथम्भूतः? अत्यल्पः अतिसंक्षिप्तः। किन्नाम? सिद्धमन्त्राह्वयः सिद्धमन्त्र इत्याह्वयोऽभिधा यस्य सः तथा; सा चाभिधा सिद्धमन्त्रवदल्पायाससाध्यत्वाद्बहुफलप्रदत्वाच्च यथार्था। प्राचीनेषु ग्रन्थेषु सत्सु कुतोऽयं ग्रन्थः क्रियते? इत्याह—वैद्या इत्यादि। अतो हेतोः प्रबन्धेन विदन्तु, के? वैद्याः भिषजः। किं? द्रव्यशक्तितत्त्वं द्रव्याण्यौषधानि, तेषां शक्तिः रोगापनयनसामर्थ्यं, तस्य तत्त्वं निरुपाधिकरूपम्। कथं? सुखेन अनायासेन; तथा द्राक् शीघ्रं; यद्यपि प्राचीनैर्ग्रन्थैर्द्रव्यशक्तिर्ज्ञायते तथापि न सुखेन, तथा न द्राक्, नापि तत्त्वत, इत्यर्थं क्रियते ॥ २ ॥

रसवीर्यविपाकैर्हि द्रव्यशक्तिर्विविच्यते ॥
कोपे शमे वा दोषाणां साऽत्र स्पष्टा न तेन ते॥३॥

ननु प्राचीनेषु ग्रन्थेषु रसवीर्यविवेकपूर्वको द्रव्यशक्तिविवेकः कृतः, इह तु कथं न तथेत्यत आह—रसेत्यादि। हि यस्माद्रसादिभिर्द्रव्यशक्तिर्विविच्यते, ननु रसादिविवेक एव फलम्। क विषये द्रव्यशक्तिः? दोषाणां कोपे शमे वा। दोषाः वातपित्त-

कफाः, कोपः संक्षोभः, शमः साम्यम् । सा द्विविधा शक्तिरस्मिन् ग्रन्थे स्पष्टा शब्दोपात्ता, नत्वन्यमन्यवद्रसादिभिरनुमेया । तेन स्पष्टाभिधानेन हेतुना ते रसादयोऽत्र नोक्ताः; अथवा तेन स्पष्टद्रव्यशक्त्यनुमितत्वेन हेतुना नोक्ताः । यथा अन्यत्र रसादिभिरनुक्ता द्रव्यशक्तयोऽनुमीयन्ते, तथात्र द्रव्यशक्तिभिरनुक्ता रसादयोऽनुमीयेरन् । तथाहि,—'वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः'-इति वचनात् यद्द्रव्यं येन दोषेण रसवीर्यविपाकैः समानं तस्य तत्कोपनं,विपरीतं शमनम् । तथा च प्रयोगाभिमतं क्षीरादि कफकोपनं भवितुमर्हति, रसवीर्यविपाकैः समानधर्मत्वात् । यद्द्रव्यं येन दोषेण समानधर्म तत्तत्कोपनं; यथा वातसमानधर्मकं फाणितं वातकोपनमिति । तत्र रसो रसनाग्राह्यो गुणः । स च षड्विधः । यदाह चरकः,—' रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥ स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च । कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः—' इति । वीर्यं द्रव्यकर्तृके कर्मणि करणभूतो द्रव्यगुणः, तच्चाष्टविधं, यदाह चरकः,—' तीक्ष्णं रूक्षं लघु स्निग्धं मृदूष्णं गुरु शीतलम् । वीर्यमष्टविधं केचित् केचिद्द्विविधमाश्रिताः ॥ शीतोष्णमिति वीर्यं तु क्रियते येन या क्रिया । नावीर्यं कुरुते किंचित् सर्वा वीर्यकृता हि सा '—इति । रसस्य साधकत्वात् विपाकस्य साधकतरत्वाच्च करणत्वं, साधकतमं हि करणम् । वीर्यं च साधकतमं, ' रसं विपाकस्तौ वीर्यं प्रभावस्तान् व्यपोहति । बलसाम्ये रसादीनामिति नैसर्गिकं बलं '—इति वचनात् । यत्र प्रतिकूले तदुपमर्दे न प्रस्य करणत्वं तत्रानुकूलेपि तस्यैव इतरस्य सहायमात्रत्वम् । प्रभावस्य त्वसाध्यकरणद्रव्यलक्षणातिरिक्तलक्षणत्वाच्च गुणत्वम् । यत्तूक्तं—' किंचिद्रसेन कुरुते कर्म पाकेन चा-

परम् । गुणान्तरेण वीर्येण प्रभावेन च किंचन ॥ यद्यद्द्रव्ये रसादीनां बलवत्त्वेन वर्तते । अभिभूयेतरांस्तत्तत् कारणत्वं प्रपद्यते-' इति । तदौपाधिकबलविषयं, स्वाभाविकबलस्य "रसं विपाकस्तौ वीर्यं प्रभावस्तान् व्यपोहति—" इत्यादिनोक्तत्वात् । औपाधिकेन बलेन द्रव्यकर्तृके कर्मणि न गुणान्तरस्य कर्तृत्वं; तत्र ह्युपाधिः कर्ता, गुणान्तरस्य तु स्थूलसूक्ष्मादेः शुक्लकृष्णादिवदप्रयोजकत्वादविवक्षेति रसवीर्यविपाकाख्यगुणत्रयवादिनां मतम् । विपाकः सर्वद्रव्यसाधारणाहारपाकप्रयानन्तरपाकजन्मा रसः, स च त्रिविधः । यदाह वाग्भटः,—'जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । रसानां परिणामान्ते स विपाक इति स्मृतः ॥ त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः' इति । तत्र ' कट्वम्ललवणं पित्तं, स्वाद्वम्ललवणः कफः । कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः॥ पित्तमुष्णं लघु स्निग्धं तीक्ष्णं,वायुर्हिमो लघुः । रूक्षस्तीक्ष्णः, कफः शीतो गुरुः स्निग्धो मृदुर्मतः ॥ कफपित्तानिलाः पाके स्वाद्वम्लकटुकाः क्रमात्-' इति दोषाणां रसवीर्यविपाकाः । तस्माद्यद्वातलं तद्वातेन रसवीर्यविपाकैः समानं, यद्वातघ्नं तद्विपरीतमिति निर्णेतुं शक्यम् । ननु ' यस्माद्दृष्टो यवः स्वादुर्गुरुरप्यनिलप्रदः । दीपनं शीतमप्याज्यं वसोष्णाप्यग्निसादनी ॥ कटुर्विपाके पित्तघ्नो मुद्गो माषस्तु पित्तलः । स्वादुपाकोऽपि चलकृत् स्निग्धोष्णं गुरु फाणितम् ॥ रसे स्वादौ यथा तद्वत्तोऽन्येष्वपि दृश्यते । वातलं कफपित्तघ्नमम्लमप्याम्रकं फलम् ॥ करुते दधि गुर्वेव वह्निं पारेवतं ननु । कपित्थं दाडिमं चाम्लं ग्राहि नामलकीफलम् ॥ कषाया ग्राहिणी शीता धातकी न हरीतकी । ........दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचिनी॥ मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ॥ कटुः पाके रसे स्निग्धो गुरुश्च कफवातजित् । लशुनो वातकफकृच्च तैरेव यद्गुणैः ॥

मिथो विरुद्धान् वातादीन् लोहिताद्या जयन्ति यत् । कुर्वन्ति यवकाद्याश्च तत्प्रभावविजृम्भितम् ॥ ........ रसेन वीर्येण गुणैश्च कर्म द्रव्यं विपाकेन च यद्विदध्यात् ॥ सद्योऽन्यथा तत्कुरुते प्रभावाद्धेतुर्यतस्तत्र न गोचरोऽस्ति-' इत्यष्टाङ्गसंग्रहोक्तरीत्या व्यभिचारदर्शनादसदनुमानमिति चेत् ? अन्यत्रापि तुल्यम् । तत्र द्रव्यशक्तिशब्दोपपत्तिरिति चेत्? अत्रापि रसादयः शब्दोपात्ताः, ' स्वाद्वम्लं नारङ्गं ' ' स्वादु पारेवतं ' 'अम्लं लकुचं' इत्यादि व्यावर्तकत्वेनोपादानान्न प्रतिज्ञाहानिः । न सर्वेषां न सर्वत्रेति चेत्? तत्रापि समानम् । किंच तुल्येऽप्यसमग्राभिधानेऽनुमानानैकान्तिकत्वे वा अन्यग्रन्थे यदर्थः प्रयासः सा द्रव्यशक्तिरेव निर्णीता, रसादयस्त्वसत्प्रायिकाः, का क्षतिरित्यलमतिवादेन । एतेन दीपनत्वाद्युक्तिदोषोऽपि निरस्त इति ॥३॥

ये यत्रोक्ता गुणा द्रव्ये ते तस्यावयवेष्वपि ॥
भेदेष्वपि विकारेष्वप्यपवादादृते मताः ॥ ४ ॥

इह वक्ष्यमाणगुणाः प्रसिद्धाविकृतावयविमात्रपर्यवसायिनो माभूवन्नित्यतिदेशं करोति-ये इत्यादि । यत्र द्रव्ये मोदक्याऽदौ ये गुणाः वातघ्नत्वादयः उक्तास्ते न केवलं तस्मिन्नवयविनि समस्त उपयुक्ते भवन्ति, अपितु तस्यावयवेष्वपि मूलत्वक्पत्रपुष्पफलादिष्वपि; तथा न केवलं प्रथमप्रतीते प्राक्प्रसिद्धे वा तस्मिन्, अपितु तस्य भेदेष्वणुमहद्दीर्घह्रस्वश्वेतरक्तपीतपुष्पादिष्वपि, तथा न केवलं तस्मिन्नविकृते, अपि तु तस्य विकारेषु स्नेहलेहक्वाथकल्कादिष्वपि, ते गुणाः अपवादादृते मताः । अपवादो बाधकं, स चात्रोपदिश्यते, नह्यतिदेशेन बाध्यते। यथा कफघ्न्या अपि बदर्याः फलं वातघ्नं, पित्तश्लेष्मलेपूपदेशान्न कफघ्नं; वातश्लेष्मलपित्तोदासीनस्यापि पलाण्डोः वातपित्तश्ले-

ष्मलेपूपदेशाय पित्तोदासीनत्वं;वातपित्तश्लेष्मापीपुरसस्य वि-कारः सितोपळा वातपित्तश्लेष्मोदासीनेषूपदेशाय श्लेष्मळा। एवं सत्यवयवावयविनोस्तालफलतालवृक्षयोः वातपित्तश्लेष्मेलपु, सामान्यविशेषयोः काञ्जिकसौवीरयोः कफवातपित्तलेपु, प्रकृतिविकारयोः सूप्यसूप्यभक्षयोः कफपित्तप्रवातलेपु यद्वचनं, तदितरेभ्योऽवयवविशेषविकारेभ्योऽतिशयार्थं, एवं सर्वत्र न्यायसिद्धिः ॥ ४ ॥

वातलं चरको ब्रूते वातघ्नं वष्टि सुश्रुतः ॥
खारणादिर्वदत्यन्यदित्युक्तेरत्र निर्णयः ॥ ५ ॥

इह परस्परविरुद्धानां चरकादिवाक्यानां तट्टीकाकारहरिचन्द्रादिकृतामेकवाक्यतां विचार्य निर्णीतो द्रव्यगुण उक्त इत्याह-वातलमित्यादि । क्वचिच्चरकोक्तादन्यत् क्वचित् सुश्रुतोक्तात् क्वचिदुभाभ्यां; अन्यच्छब्दो विपरीतवाची, चरकसुश्रुतयोः चरकखारणाद्योः चरकसुश्रुतखारणादीनां च परस्परविरुद्धानां द्रव्यशक्तिविषयाणामुक्तीनामत्र ग्रन्थे निर्णयो निर्णीतार्थवचनम् । तत्तु यथाश्रुतमवानुवाद इत्यर्थः । यथा चरकेण मधु वातलमुक्तं, "वातलं गुरु शीतं च रक्तपित्तकफापहम् । संधातृच्छेदनं रूक्षं कषायं मधुरं मधु-" इति । सुश्रुतेन तु वातघ्नमुक्तं,- " मधु तु मधुरं कषायानुरसं शीतलं रूक्षं अग्निदीपनं वर्ण्यं स्वर्यं लघु सुकुमारं लेखनं हृद्यं वाजीकरणं संधानं रोपणं चक्षुष्यं प्रसादनं सूक्ष्ममार्गानुसारि पित्तश्लेष्ममेदोमेहहिक्काश्वासातिसारच्छर्दितृष्णामूर्छाविषप्रशमनं ह्लादि त्रिदोषप्रशमनं तत्तु लघुत्वात् कफघ्नं पैच्छिल्यान्माधुर्यात् कषायभावाच्च वातपित्तघ्नं -" इति । तच्चात्र ग्रन्थे कफपित्तघ्नवातो-

दासीनमध्ये पठितम्। ननु मधुनो वातोदासीनत्वे किं मूलं? परस्परविरोधपरिहारेण व्याख्यायमाने चरकसुश्रुतवाक्ये एव वातोदासीनत्वे स्वीक्रियमाणे तत्तदुपाधिवशाद्वातलवातमत्वे मधुन्युपपद्येते, तेन विषयभेदाच्चरकसुश्रुतवाक्ये न विरुध्येते, वातलत्वे स्वीक्रियमाणे वातमोपहितस्य परस्परशक्तिप्रतिबन्धाद्वातोदासीनत्वमेव स्यान्नतु वातलत्वं, ततश्च सुश्रुतवाक्येन विरोधस्तदवस्थ एवावातलत्वाभिभवाद्वातमत्वं स्यादिति चेदि न,अभिभवे प्रमाणाभावात्। सुश्रुतोक्तवातमत्वस्यान्यथानुपपत्तिरेव प्रमाणमिति चेद् ? न, तस्योक्तरीत्याप्युपपत्तेः। उक्तरीतावपि वातोदासीनत्वाभिभवाङ्गीकाराम विशेष इति चेत् ? न, औदासिन्यस्य शमनत्वकोपकत्वाभावरूपत्वेनाप्रतिबन्धत्वं दृश्यते, अभावमुखेन तत्र तत्र तस्य तस्योक्तेः। यथा 'पलाण्डुः कफं करोति नो पित्तं, इति, 'तैलं कफकृन्न च' इत्यादि। तेन वातोदासीने मधुनि निष्प्रतिबन्ध उपाधिव्यापारो, वातले तु सप्रतिबन्ध इति महान् विशेषः। निष्प्रतिबन्ध उपाधिव्यापारे वातलोपहितस्य मधुनो वातलत्वे न्यायसिद्धे वचनवैयर्थ्यमिति चेद् ? न, असिद्धे औदासीन्ये न्यायमवृत्तिरिति। इह तु तस्मादेव वचनाद् न्यायसहकृतादौदासीन्यसिद्धिः। किंच वातलत्वं वातमत्वमप्यङ्गीकर्तुं शक्यमित्येष निर्णय एव। तस्माच्छुद्धं मधुवातोदासीनमित्यभिहितम्। उपाधिभेदाद्वातलं वातमं चेत्युचितम्। उपाधयश्च मात्रादयः। तथा चाष्टाङ्गसंग्रहे,–"मात्रायोगक्रियादेशकालावस्थादिभेदतः। ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा"–इति। नच मात्रादेशकालावस्थावियुक्तद्रव्यस्यासंभवाच्छुद्धगुणोक्तिरनुपयुक्ता, शुद्धगुणानुसारेण ह्युपा-

विकृतो विक्षेपः। तथा हीनमात्रया तिक्तादिभिर्वा युतं कुल्माषादिना संस्कृतं वा जाङ्गलदेशे वृद्धे वा देहे वर्षासु शीतकाले जीर्णतायां वाऽवस्थायामनुपयुक्तं वातोदासीनं न वातलं न वा वात हन्ति, उपाध्यन्तरसंस्कृतं तु हन्ति। एवमन्यत्राप्यूह्यम्। तस्मात्स्वभावमेव मधुनो वातोदासीनत्वम्। अत एव खारणादिनापि वातघ्नं न प्रोक्तं; तथा च तद्वाक्यं 'कषायानुरसं रूक्षं शीतं स्वादु गुणाधिकम्। लेखनं भग्नसंधातृ छेदनं विशदं गुरु ॥ क्षतहृष्णाविषच्छर्दिरक्तपित्तकफापहम्। संग्राहि मधुरं हृद्यं माक्षिकं मधुरं मधु"--इति, ये तु सुश्रुतवाक्ये 'त्रिदोषशमनं वातपित्तघ्नं' इति च वायोः सहनिर्देशात् 'पित्तश्लेष्ममेदोमेह' इति कफपित्तयोः पृथङ्निर्देशात्संसृष्टवातविषयं सुश्रुतवाक्यमसंसृष्टवातविषयं चरकवाक्यमित्याहुः, ते न सुश्रुताचार्याभिप्रायान् विदुः। यो ह्ययं त्रिदोषशमनमिति सहनिर्देशः स लाघवार्थः, यत्तु वातपित्तघ्नमिति च स माधुर्यस्य हेतोर्मध्ये पठितस्योभयप्रयोजनार्थं, 'पैच्छिल्यान्माधुर्याल्कषायाद्वातपित्तघ्नं' इति, 'माधुर्यात् कषायभावाच्च कफाद्वात विघ्न' इति। जेज्जटोऽप्याह,-'पैच्छिल्यात्सौकुमार्याद्वातघ्नं, लघुत्वात् कषायभावाच्च कफघ्नं, माधुर्यशैत्यादिभिः पित्तहर' इति त्रिदोषशमनं; द्रव्यप्रभावाच्च द्रव्ये परतन्त्रा हि प्रभाववशवर्तिनो गुणादय। यत्तु कफपित्तयोः पृथग् निर्देश स मेहादिविशेषणार्थः, कफपित्तजाने च मेहादीन् हन्ति न वातजानिति। हेतुप्रत्यनीकत्वादन्यदेव व्याधिप्रत्यनीकत्वमिति वातघ्नत्वेऽपि न वातजमेहादिघ्नत्वम्। किंच योगवाही वायुरिति कफपित्तघ्नत्वादेव संसृष्टवातघ्नत्वे सिद्धेऽस्य तत्परत्वे वचनवैयर्थ्यं; पठ्यते हि तत्र तत्र योगवाहित्वं वायो, 'ग्रीष्मे मायो मरुत्पित्ते वसन्ते कफमारुतौ। वायोस्तु योगवाहित्वात्

वातपित्ते तु शारदि' इति। 'पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत्। दाहः पित्तयुते' इत्यादि। यत्तु क्षौद्रादीनां वातलत्वं दृष्ट्वा तद्विषयं चरकवाक्यं, इतरविषयं सुश्रुतवाक्यमित्याहुः, ते हि शास्त्रतत्त्वं न विदुः। न ह्येते मधुसामान्यस्य गुणाः, किं तु माक्षिकाख्यस्य मधुविशेषस्य, खारणादिना स्पष्टीकृतत्वात्, सामान्यस्य विशेषणोऽपसंहारात्। तस्मात्पूर्वैव विषयव्यवस्था, एतेन गौरवलाघवविरोधो निरस्तः। तथा चरकेण वेत्राग्रं वातले पठितं "मंडूकपर्णी वेत्राग्रं कुचैला वनतिक्तकम्। कर्कोटकावल्गुजिकं पटोलं शकुलादनी॥ वृषपत्राणि शार्ङ्गेष्टा केबुकं सकटिल्लकम्। नाडी कलायगोजिह्वा वार्ताकं तिलपर्णिका॥ कुलकं कर्कशं चैव शाकं पर्पटकं तथा। कफपित्तहरं तिक्तं वातलं कटु पच्यते'–इति। खारणादिना त्रिदोषघ्नेषु पठितं 'चञ्चुर्मसूरिका पाठा वेत्राग्रं सुनिषण्णकम्। पत्रशाकं च संग्राहि दोषत्रयहितं लघु'–इति। तदप्यत्र मधुवन्निर्णीय पठितम्। अतएव सुश्रुतेन कफपित्तघ्नेष्वेवोक्तं 'आटरूपकवेत्राग्रगुडूचीनिम्बपर्पटाः। किरातिक्तसहितास्तिक्ताः पित्तकफापहाः'–इति। हरिचन्द्रोऽप्याह,- "सर्वं तिक्तं वातलमवृष्यमन्यत्र वेत्राग्रपटोलयोः" इति। तथा सुश्रुते वेणुपर्ण्यादीनि तृणधान्यानि पित्तलान्युक्तानि 'कोरदूषनीवारश्यामाकसंतनुवरकोद्दालप्रियङ्गुमधूलिकानन्दीमुखीकुरुविन्दगवेधुकबरचरकतोदपर्णीमुकुन्दवेणुपत्रप्रभृतयस्तृणधान्यविशेषाः उष्णाः कषाया मधुरा रूक्षाः कटुविपाकिनः श्लेष्मघ्नाः बद्धनिष्यन्दा वातपित्तप्रकोपनाः–' इति। खारणादिना पित्तघ्नान्युक्तानि 'श्यामाकहस्तिश्यामाकनीवाराणि प्रियङ्गवः। गवेधुकातोदपर्णी नाडीगर्भातिकोद्रवाः॥ प्रशान्तिकाम्भःश्यामाको लोहिताः कोरदूषकाः। चरका घूर्णपादाश्च कुंभीका सकुकूदकाः॥ कषाया मधुरा

कषा रक्तपित्तकफापहाः । अवृष्या लघवः शीताः छेदना वातकोपनाः'–इत्यादि । तान्यप्यत्र मधुकनिर्णीय कफमवातलपित्तादोसीनान्युक्तानि । अतएव चरकेण कोरदूषश्यामाकादावादौ पृथगुक्त्वा ततसदृशान्युक्तानि 'सकोरदूषः श्यामाकः कषायमधुरो लघुः । वातलः कफपित्तघ्नः शीतः संग्राहि शोषणः ॥ हस्तिश्यामाकनीवारतोदपर्णीगवेधुकाः । प्रशान्तिकाम्भःश्यामाको लोहित्याणुप्रियङ्गवः॥ मुकुन्दो झिण्टी गर्मुटी चारुकवरकास्तथा । शिबिरोत्कटजूर्णाह्वा श्यामाकसदृशाः गुणैः' इति । सदृशगुणत्वान्न्यूनगुणत्वं, उपमेयं ह्युपमानतोऽपकृष्टं भवति । तेन श्यामाकः पित्तं हन्ति, हस्तिश्यामाकादयस्तु हन्तुमसमर्था इत्यर्थः । कफवातयोरप्येवं प्रसंग इति चेत्? न, तन्त्रान्तरे वातलत्वकफघ्नत्वयोरुपदेशात्, उपदेशो ह्यतिदेशाद्बली। एतेनौष्ण्यशैत्याविरोधोऽप्यपास्तः । तथा चरकेण पटोलफलं वातघ्नमुक्तं 'मण्डूकपर्णी' इत्यादि, सुश्रुतेन वातोदासीनमुक्तं 'कफपित्तहरं वृष्यमुष्णं तिक्तमवातलम् । पटोलं कटुकं पाके वृष्यं रोचनदीपनं–' इति, खारणादिना तु वातघ्नमुक्तं 'सस्नेहोष्णं लघु स्वादु पाके दोषानुलोमनम् । उष्णं तिक्तं त्रिदोषघ्नं शाकं निम्बपटोलयोः'–इति । 'पटोलनिम्बं वातघ्नं तिक्तमन्यत्तु वातलं'–इति । तत्रात्र खारणादिमतमङ्गीकृत्य त्रिदोषघ्नेषु पठितं; चरकोक्तस्य हि वातलमित्यस्य कुचैलादिभिरन्वयेन सार्थक्यं, पटोलस्य च कफपित्तहरादिभिः । अतएव हरिचन्द्रजेज्झटादयष्टीकाकारा अपोद्धृत्य व्यतिरेकेण गुणानाहुः । न च सुश्रुतोक्तस्यावातलमिति शब्दस्य वातघ्नमित्यर्थः, विरुद्धार्थत्वात् । यद्यपि वातोदासीनत्ववातघ्नत्वयोः सहानवस्थानलक्षणविरोधोऽस्त्येव, तथापि तन्त्रान्तरविरोधभयात्तन्नात्र व्याख्येयम् । अथवा अवातलशब्देन वातकरणाभाव उच्यते, स च वातघ्नेऽप्यस्तीत्यविरोधः । अतएव

वाग्भटः,–'तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् । कृतेऽमृतापटोलाभ्यां शुण्ठीकृष्णारसोनतः'–इति । माधवकारोऽपि,–'पटोलपत्रं पित्तघ्नं वल्ली तस्य कफापहा । फलं त्रिदोषशमनं मूलं चास्य विरेचनं'–इति । कटुस्वादपाकयो रसवदविरोधः । एवमन्येऽपि विरोधाः शास्त्रसहितेन तर्केण परिहरणीयाः । चरकादीनां त्रयाणामेवोपादानमेतत्प्रणीततन्त्राणां प्रमाणत्वात् संपूर्णत्वाद् विच्छिन्नसंप्रदायत्वादभियुक्तैर्व्याख्याततत्वाच्च । अतएव तद्विरुद्धानामन्येषामप्रामाण्यमेव, यथा 'फलं तु पित्तलं तालं सरं' इति वाग्भटवाक्यस्य 'फलं स्वादु रसे तेषां तालजं गुरु पित्तकृद' इति सुश्रुतवाक्यविरोधात्; न चान्यन्मूलं, खारणादिरप्याह,–'पनसं नारिकेलं च तालसस्यं च तर्पणम् । स्वादु शीतं गुरु स्निग्धं बृंहणं कफशुक्रलम्'–इति । चरकोऽपि–' तालसस्यानि सिद्धानि नारिकेलफलानि च । बृंहणस्निग्धशीतानि बल्यानि मधुराणि च' इति । एतद्विवरणे चक्रपाणिरपि 'तालसस्यानि तालफलानि, सिद्धानि पक्कानि, मधुरस्निग्धशीतत्वेन वातपित्तहरत्वे कफकृत्त्वं च मन्तव्यं' इति । किंच रस इत्यत्र रसमिति कृदित्यत्र कृदित्यन्यथा ग्रहीतु सुश्रुतवाक्यमेवात्र मूलं संभाव्यते । अतएवात्र तालफलं वातपित्तप्रश्लेष्मलेषु पठितमिति ॥ ५ ॥

वातघ्नमेव यद्द्रव्यं तद्वातं हन्ति केवलम् ॥
सान्यं च केवलावन्यौ न हन्ति न करोति च ॥६॥
वातघ्नमन्यजननं द्रव्यं यद्धन्ति तच्चलम् ॥
केवलं केवलौ सान्यावन्यो वर्धयते मलौ ॥ ७ ॥
वातघ्नमन्योदासीनं यत्तच्छुद्धानिलापहम् ॥
शुद्धौ सान्यौ न हन्त्यन्यौ न करोतीति सर्वतः॥८॥

वाते पित्ते कफे वातपित्ते वातकफे क्रमात् ॥
कफपित्ते त्रिषु हिता वर्गाः सप्ताहितोऽष्टमः ॥ ९॥

अथ वातमादिसप्तपञ्चाशद्भेदान् व्यनक्ति–वातमयेवेत्यादि। एवकारः पित्तादिव्युदासार्थः। अन्यशब्देन पित्तकफौ व्यस्तौ समस्तौ च। चकं वायुम्। शुद्धः केवलः। तत्र यत्केवलं सपित्तं सकफं सपित्तकफं वा वातं हन्ति, केवलं पित्तं कफं पित्तकफं वा न हन्ति नापि करोति, तद्वातघ्नम्। यत्केवलं वातं हन्ति, केवलं सवातं वा पित्तं करोति, तद्वातघ्नपित्तलम्। एवं वातघ्नश्लेष्मलम्, वातघ्नपित्तश्लेष्मलं च। यत्केवलं वातं हन्ति केवलं सवातं वा पित्तं न हन्ति न करोति तद्वातघ्नपित्तोदासीनम्। एवं वातघ्नश्लेष्मोदासीनं वातघ्नपित्तश्लेष्मोदासीनं, वातघ्नश्लेष्मलपित्तोदासीनं, वातघ्नपित्तलश्लेष्मोदासीनं च, एते नव वातघ्नभेदाः, एवं पित्तघ्नश्लेष्मघ्नयोः। वातपित्तघ्नं, वातपित्तघ्नश्लेष्मलं, वातपित्तघ्नश्लेष्मोदासीनं चेति त्रयो वातपित्तघ्नभेदाः। एवं वातश्लेष्मघ्नपित्तश्लेष्मघ्नयोः। दोषत्रयघ्नमेकं, दोषत्रयोदासीनमेकमेवमेकादश। सपित्तं सकफं सपित्तकफं वा वातं करोति, केवलं पित्तं कफं पित्तकफं वा न हन्ति न करोति तद्वातलम्। यत्केवलं वातं करोति केवलं सवातं वा पित्तं न करोति न हन्ति तद्वातलपित्तोदासीनम्। एवं वातलश्लेष्मोदासीनं, वातलपित्तश्लेष्मोदासीनं च। एवं चत्वारो वातलभेदाः। एवं पित्तलश्लेष्मलयोः। वातपित्तलं वातपित्तलश्लेष्मोदासीनं चेति द्वौ वातपित्तलभेदौ। एवं वातश्लेष्मलपित्तश्लेष्मलयोः। दोषलमेकम्। एवमेते सप्तपञ्चाशद् द्रव्यभेदाः। सपित्तवाते वातप्राधान्यं, वातपित्ते तूभयप्राधान्यं वाच्यमित्यसङ्करः। प्राधान्यं चाधिकरसस्थानस्थत्वाविरोधकत्वादिभिः। वातपित्तघ्नाल्पश्लेष्मघ्नाद यत्तरतमभेदा। वातघ्नपित्तश्ले-

प्मलाद्यन्तर्भूतत्वादनन्तत्वाच्च न गणिताः । यत्र द्रव्ये यो दृष्टः

१ द्रव्याणां सप्तपञ्चाशद्भेदाः अनुक्रमेण लिख्यन्ते । यथा—

१ वातघ्नम् ।
२ वातघ्नपित्तलम् ।
३ वातघ्नश्लेष्मलम् ।
४ वातघ्नपित्तश्लेष्मलम् ।
५ वातघ्नपित्तोदासीनम् ।
६ वातघ्नश्लेष्मोदासीनम् ।
७ वातघ्नपित्तश्लेष्मोदासीनम् ।
८ वातघ्नपित्तलश्लेष्मोदासीनम् ।
९ वातघ्नश्लेष्मलपित्तोदासीनम् ।
१० पित्तघ्नम् ।
११ पित्तघ्नवातलम् ।
१२ पित्तघ्नश्लेष्मलम् ।
१३ पित्तघ्नवातश्लेष्मलम् ।
१४ पित्तघ्नवातोदासीनम् ।
१५ पित्तघ्नश्लेष्मोदासीनम् ।
१६ पित्तघ्नवातश्लेष्मोदासीनम् ।
१७ पित्तघ्नवातलश्लेष्मोदासीनम् ।
१८ पित्तघ्नश्लेष्मलवातोदासीनम् ।
१९ श्लेष्मघ्नम् ।
२० श्लेष्मघ्नवातलम् ।
२१ श्लेष्मघ्नपित्तलम् ।
२२ श्लेष्मघ्नवातपित्तलम् ।
२३ श्लेष्मघ्नवातोदासीनम् ।
२४ श्लेष्मघ्नपित्तोदासीनम् ।
२५ श्लेष्मघ्नवातपित्तोदासीनम् ।
२६ श्लेष्मघ्नवातलपित्तोदासीनम् ।
२७ श्लेष्मघ्नपित्तलवातोदासीनम् ।
२८ वातपित्तघ्नम् ।
२९ वातपित्तघ्नश्लेष्मलम् ।
३० वातपित्तघ्नश्लेष्मोदासीनम् ।
३१ वातश्लेष्मघ्नम् ।
३२ वातश्लेष्मघ्नपित्तलम् ।
३३ वातश्लेष्मघ्नपित्तोदासीनम् ।
३४ पित्तश्लेष्मघ्नम् ।
३५ पित्तश्लेष्मघ्नवातलम् ।
३६ पित्तश्लेष्मघ्नवातोदासीनम् ।
३७ दोषत्रयघ्नम् ।
३८ दोषत्रयोदासीनम् ।
३९ वातलम् ।
४० वातलपित्तोदासीनम् ।
४१ वातलश्लेष्मोदासीनम् ।
४२ वातलपित्तश्लेष्मोदासीनम् ।
४३ पित्तलम् ।
४४ पित्तलवातोदासीनम् ।
४५ पित्तलश्लेष्मोदासीनम् ।
४६ पित्तलवातश्लेष्मोदासीनम् ।
४७ श्लेष्मलम् ।
४८ श्लेष्मलवातोदासीनम् ।
४९ श्लेष्मलपित्तोदासीनम् ।
५० श्लेष्मलवातपित्तोदासीनम् ।
५१ वातपित्तलम् ।
५२ वातपित्तलश्लेष्मोदासीनम् ।
५३ वातलश्लेष्मलम् ।
५४ वातपित्तलश्लेष्मोदासीनम् ।
५५ पित्तश्लेष्मलम् ।
५६ पित्तश्लेष्मलवातोदासीनम् ।
५७ त्रिदोषलम् ।

स तत्रोक्त एव । यथा 'वातघ्नी पित्तला चाल्पकफा चाप्यार्क्षि-की सुरा' इति । अथ प्रकरणशुद्ध्यर्थं वर्गानुपदिशति । त्रिषु वात-पित्तकफेषु हिताः, वातादिषु प्रकुपितेषु सत्सु सेव्यमानं यत् स्वास्थ्यं करोति तद्धितं द्रव्य, तत्प्रकाशनाद्वर्गा अपि हिता', एवमहमोऽहितः, इत्येषवर्गोऽयं सिद्धमन्त्र. ॥ ६–९ ॥

इति वोपदेवीये सिद्धमन्त्रप्रकाशे नवश्लोकी ।

वातघ्नं मोदकी तिन्दुः कार्पासी कोकिलाक्षकः ।
वेल्लन्तरो ग्रन्थिपर्णी मुसली स्थलपद्मिनी ॥ १० ॥
बिल्वपर्णी बिल्वपत्रमैरावत्युत्तमारणी ॥
रुबोः फलं च स्वाद्वम्लं नारङ्गं सगुडं दधि ॥ १ ॥
रसाला रसं मांसं मन्थः स्नेहगुडाम्लयुक् ॥

मोदकी गुडमञ्जरी । तिन्दुर्वीरखा । कार्पास्याच्छदनफला । कोकिलाक्ष इक्षुरक । वेल्लन्तरो वीरतरु । ग्रन्थिपर्णी गन्धद्रव्यविशेष. । मुसली तालमूलिका । स्थलपद्मिनी स्थलकमलिनी । बिल्वपर्णी शाकविशेषः । बिल्वपत्र प्रसिद्धम् । ऐरावती गोधावती । उत्तमारणी करम्भा । रुबो फलमेरण्डबीजम् । स्वाद्वम्लं नारङ्गं मधुराम्लरस नारङ्गफलम् । सगुड गुडमिश्रम् । रसाला शिखरिणी तल्लक्षणं तु, 'अर्धाढक स्वचिरपर्युषितस्य दध्न खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पि पल मधु पलं मरिच द्विकर्ष शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् ॥ श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टा कर्पूरवाससुरभीकृतभाण्डसंस्था । एषा वृकोदरकृता सुरभी रसाला या स्वादिता भगवता पुरुषोत्तमेन' इति । सरस मांस रसमनुधृत्य पक्व मांसम् । मन्थ स्नेहगुडाम्लयुक् स्नेहगुडाम्लैर्मिलितैर्युक्तो मन्थ. । स्नेहो घृतादि, अम्लो दाडिम-

सारादिः । मन्थः सुश्रुतोक्तः, 'सक्तवः सर्पिषाऽभ्यक्ता शीतवारिपरिप्लुताः । नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते" । एतत्सर्वं वातघ्नमिति ॥ १० ॥ ११ ॥—

वातघ्नपित्तलं भक्ष्यस्तैलसिद्धोऽम्लगोरसः॥१२॥

भक्ष्यस्तैलसिद्धस्तैलपक्वो भक्ष्यः पूरीकादिः, अम्लगोरसो अम्लं तक्रं, एतद्द्वयं वातघ्नपित्तलम् ॥ १२ ॥

वातघ्नं श्लेष्मलं चास्थिशृङ्खला शतपोरकः ॥
स्वादु पारेवतं वेसवारकः पृथुकस्तथा ॥ १३ ॥
भक्ष्याः फलगुडस्नेहतिलफाणितमांसजाः ॥
क्षीरसारः किलाटो विष्यन्दपीयूषमोरणाः॥१४॥
कूर्ची खलः काम्बलिको दधिको मधुरं दधि ॥

अस्थिशृङ्खला वज्रभोक्ता । शतपोरकः इक्षुविशेषः । स्वादु पारेवत तद्विविधम् । तथाहि,—"पारेवतं मधुरमम्लमिति द्विधा स्यात् स्यात्सिन्दुकाकृतिफलं लघुपाण्डुपुष्पम् । नीलच्छदाद्रिगदितं तु परेवताख्यं तत्पुष्कराश्रमसमीपवने प्रसिद्धम्—" इति। वेसवारकः सुश्रुतोक्तः, "मांसं निरस्थि सुस्विन्नं पुनर्दृषदि पेषितम्। पिप्पलीशुण्ठिमरिचगुडसर्पिःसमन्वितम्॥ एकध्य पाचितं सम्यक् वेसवार इति स्मृतः-" इति। पृथुका पृष्टस्याहतस्य शाल्यादेस्तण्डुलाः । फलजा भक्ष्या पियालमज्जादिकृताः । गुडजा गुडगर्भाः । स्नेहजाः स्नेहपक्वाः। तिलजास्तिलगर्भा । फाणितजाः फाणितगर्भाः । मांसजाः मांसकृताः । क्षीरसारकिलाटपीयूषमोरणकूर्च्यः क्षीरविकाराः । तत्र क्षीरसारः प्रसिद्धः, "गोरसव्यशसंयुक्तं क्षीरं घनिष्ठमतापनात् । घनीभूतं किलाटं स्यात्, स्मृतस्तन्यस्तु मोरणः—" इति किलाटो मोरणश्च । पीयूषभेदो मोरण इत्यन्ये। अथवा "क्षीरं सद्यः प्रसूतायाः पीयूषो माऽटर्न

यनम् । सप्तराशात्पर क्षीरममसर्म च मोरणः" इत्युक्तः । "दध्ना सह पय पक्वं यत्तत् स्याद्दधिकूर्चिका । तक्रेण तक्रकूर्चीका सरिपण्डस्तु किलाटक" इति द्विधा कूर्चिका । विष्यन्दो "घृतभ्रष्टास्तु तण्डुला" इति जेज्जट, संस्कृत पायसमित्यन्ये। "आम गोधूमज चूर्ण सर्पि क्षीरसमन्वितम् । नातिद्रव नातिघन विष्यन्दो नाम नामतः" इत्यपरे । सूपशास्त्रे तु,-"दधिक्षीरे समे कृत्वा त्वर्धभागावशेषिते । आवपेद्रक्तशालीनां तण्डुलांस्तिलसंयुतान् ॥ पियालपनसास्थीनां बीजपुष्टिं समावपेत ॥ क्षीरं तुल्य घृत चात्र शर्करां तु महागुणाम् । सिद्ध त्रिकटुकोपेत कर्पूरेणाधिवासितम् ॥ एप विष्यन्दनो नाम स्वर्गलोकेऽपि दुर्लभ । यस्मात्पक्वोऽपि हि घृत स्यन्दते सर्वतो भृशम् । तस्मात् सूपविधानज्ञैः विष्यन्द इति स स्मृत" इत्युक्त । दधिक इति खलकाम्बलिकयोर्विशेषण, तक्रादिसिद्धव्युदार्थम् । तत्र खलः फलानां शाकानां च नि काथ । स एव तिलकल्कज स्पष्टाम्ल काम्बलिक । यदाह वाग्भट,-" विशितेन रसस्तत्र यूषो धान्यैः खल फलै । मूलैश्च तिलकल्काम्लप्राय काम्बलिक स्मृत"- इति । सफलैरिति विशेषण शाकोपलक्षणपरम् । यदाह चरक, " चाङ्गेर्याश्चुक्रिकायाश्च दुग्धिकायाश्च कारयेत् । खलान्दाधिसुरोपेतान् घृतभ्रष्टान् ससैन्धवान्-" इति । यत्तु "कपित्थतक्रचाङ्गेरीमरीचाजाजिचित्रकैः । सुपक्व खलयूषोऽयं यूप काम्बलिकोऽपर ॥ दध्यम्ललवणस्नेहतिलमाषसमन्वित"-इति खलयूषकाम्बलिकयूपयोस्तद्विशेषयोर्लक्षणम् । काम्बलिकोत्र काम्बलिकयूष । यदाह सुश्रुत,-"दधिमस्त्वम्लसिद्धस्तु यूष काम्बलिकः स्मृत"- इति । यच्च नलेनोक्तम्, " तिलांस्तु निस्तुपान्कृत्वा पिष्ट्वा क्षीरे व्यपोषितान् । पटे पूतान् पचेद्धीमानार्द्रकोत्थापिते घृते ॥ मरीचाजाजिसामुद्रैर्युक्तास्तिलरसो भवेत् । पुनः सौवर्च-

काञ्जाजाजीबीजपूरकसौरभैः ॥ संयोज्य भवितः स्वच्छो यूषः काम्बलिको भवेत् "इति एतदपि विडकाम्बलिकयोस्तद्विशेषयोरेव लक्षणम् । " दधिदाडिमशाकस्नेहयुक्तं व्यञ्जनं खलः " इति जेज्जटोक्तिरपि । विशेषेण च मधुरं दधि स्वादुरसं दधि । एतत्सर्वं वातहरं कफकरं च ॥ १३–१४ ॥—

वातघ्नं पित्तकफकृन्निश्रेया गिरिपादिका॥१५॥
फलं तु कपिकच्छूरुमाणवेत्रकरञ्जकम्॥
वातामाभिपुकाक्षोडमुकूलकनिकोचकम् ॥१६॥
अम्लं लकुचमेलानमारुकं मृगलेण्डिकम् ॥
द्राक्षावृक्षाम्लकोशाम्रनीपाम्रातकराम्लकम्॥१७॥
प्राचीनामलनारङ्गपारेवतपरूपकम् ॥
चिञ्चा कोलानि लवणं मापातसितिलं दधि॥१८॥
कृशरा च वसा मज्जा मेदो मेपीपयः सुरा ॥
पोत्रीभमहिषा,मत्स्या राजीराजीवपाटलाः॥१९॥
मुरलो निरुलो नन्दी वारलो वागुजारलः ॥
पाकमत्स्यःकृष्णमत्स्यो गोमत्स्यो मकरस्तिमिः॥२०॥
तिमिङ्गिलमहामीनशफरीवर्मिचन्द्रकाः ॥
सहस्रदंष्ट्रः पाठीनो गर्गराः कुलिशादयः॥२१॥
गोश्वोष्ट्रमेदपुच्छाश्वतरमेपखरादयः ॥
ग्राम्याः, गुहाशयाः सिंहव्याघ्रद्वीपितरक्षवः॥२२॥
बभ्रुभ्वर्क्षशृगालोतुर्मृगैर्वारुवृकादयः ॥
शशम्रीभासक्करगृध्रचीरिल्लवायसाः ॥ २३ ॥

कङ्कोल्लूकश्येनचापधूमिकामद्गुहादयः ।
पक्षिणः प्रसहाः, पर्णमृगा मूषकवानरौ ॥ २४ ॥
गोलाङ्गुलद्रुमशयमद्गुपूतिघसादयः ॥
श्वेतश्यामाश्चित्रपृष्ठः कालकः काकुलीमृगः॥२५॥
भेकचिल्लककूर्चीकबभ्रुप्रियकशाण्डकाः ॥
कदलीनकुलश्वाविन्नीलीकृतखण्डजाहकाः॥२६॥
मार्जाराजगरा ह्याखुलोपाकाद्या बिलेशयाः ॥

मिश्रेया शतपुष्पाभेदः । गिरिपादिका काकाण्डोला । कपिकच्छूरादि निकोचान्तं फलं; तत्र कपिकच्छूरात्मगुप्ता, येत्रं प्रसिद्धं, करञ्जो नक्तमालः, शेषमुत्तरापथे प्रसिद्धम् । तत्रोरुमाणमुकुलकनिकोचकानि प्रहणदन्तपङ्कोल्लफलानीत्येके । वातामं मज्जमधुरं स्निग्धं दीर्घम् । अक्षोटं मदनफलाभं मध्योन्नतरेखम् । अम्लमिति लकुचादीनां कोलान्तानां विशेषणं, मधुरादिव्युदासार्थम् । तत्र लकुचं क्षुद्रपनसम् । पलानैरावतम् । आरुकं कार्तिकेयपुरे प्रसिद्धम् । तच्चतुर्धा,—"आरुकं वीरसेनं च वीरं वीरावकं तथा। विद्यान्नाति विशेषेण तच्चतुर्विधमारुकं"—इति । मृगलेण्डकं कर्कटम् । द्राक्षा गोस्तनी । वृक्षाम्लं तिन्तिडीकम् । कोशाम्रं लाक्षावृक्षफलम् । नीपं राजकदम्बफलम् । स च "नीपो बृहद्वृहसमीपभुवि प्रभूतो लोकप्रसिद्धतरराजकदम्बनामा । प्रांशुर्मधूकतरुपत्रसमानपत्रः स्वाद्वम्लपक्वफल एव सुगन्धिपुष्पः" इत्युक्तः । आम्रातमाम्रवाटम् । कराम्लं करमर्दम् । प्राचीनामलं पानीयामलकम् । नारङ्गं नारङ्गफलम् । पालेवतं प्याख्यातम् । परूषकं परूपकस्यैव फलं, स च "धन्वनाकारहरितपत्रो घण्टाकृतिर्भवेत् । पक्वपकोलवरास्थिमृदुफलः फरसुनामकः"—इत्युक्तः । चिचा चुक्रिका । कोलानि

बदराणि, बहुवचनं बृहद्ह्रस्वमध्यमानां फलानां ग्रहणार्थम् । लवणं पटु । माषातसितिलाः धान्यभेदाः प्रसिद्धाः । दधि प्रसिद्धम् । तच्चात्राम्लं, मधुरस्य प्रागुक्तत्वात् । कृशरा तिलतण्डुलमाषोत्था क्षीरपेया । वसा मांसस्नेहः । मज्जा अस्थिभवस्नेहः । मेदः प्रसिद्धम् । मेषीपय आविकं क्षीरम् । सुरा शालिपिष्टकृतो मद्यविशेषः । पोत्री सूकरः । इभो हस्ती । महिषो लुलायः । राज्यादि कुलिशान्ताः मत्स्याः कैवर्तेषु प्रसिद्धाः । तत्र राजी कृष्णदीर्घाकारः, राजीवो लेखाङ्कितः, पाटलः पाटलापुष्पाभः, मुरलो वेष्टिताङ्गः, निरुलो जलनिलीनः, नन्दीवारलः समुद्रसिङ्गाकः, वागुजारलो वागुसः । तल्लक्षणं, " महाशकलसंयुक्तकृष्णवर्णो महाशिराः । महामत्स्य प्रसिद्धोऽसौ वागुसः स्थूलकण्टकः–" इति । पाकमत्स्यः पाकैरर्भकैस्सह यो विचरतिः गोमत्स्यमकरौ प्रसिद्धौ, तिमि शतयोजनायामः, तिमिङ्गिलो तिमिभक्षको महामत्स्यः, तिमिङ्गिलगिल तदुक्तं " अस्ति मीनस्तिमिर्नाम शतयोजनविस्तृतः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव–" इति । शफरी क्षुद्रमत्स्यः । वर्मि सर्पाकारः, चन्द्रक संकण्टकपार्श्ववर्तुलः, सहस्रदंष्ट्रो महामीनः, पाठीनः "रूप्यवर्णोदरो दीर्घः कृष्णवर्णो महाशिराः । पाठीनो मत्स्यभेदः स्यादेककण्टकमञ्जरी " इत्युक्तः, गर्गरः प्रसिद्धः, कुलिशो वज्राभः, आदिशब्दादन्येऽपि तज्जातीयाः । गवादयः खरान्ताः ग्राम्याः ग्रामे भवाः । तत्र गौः प्रसिद्धा, अश्वो घोटकः, उष्ट्रः करभः, मेढ्पुच्छो डुम्बक 'घटक' इत्येके, अश्वतरो वेसवारः, मेषः मेढः, खरो गर्दभः । सिंहादयो वृकान्ता गुहाशयाः ' गुहासु शेरते ' इति गुहाशया । तत्र सिंहव्याघ्रौ प्रसिद्धौ, द्वीपी चित्रव्याघ्रः, तरक्षुर्मृगादनः, बभ्रुरच्छभल्लः, श्वा कुक्कुरः, भल्लः, प्रसिद्धः शृगालो जम्बुकः ओतुर्वनमार्जारः,

षड्विधो हि मार्जारः "ग्राम्यो वन्यस्तोयजश्च पक्षिमार्जारखिञ्जकौ। सुगन्धिवृषणश्चेति मार्जाराः षट् प्रकीर्तिताः—" इति, मृगैर्वारुः हरिणभुक्, वृको वत्सभक्ष्यः ।' शशघ्नीप्रभृतयो मधुहाद्यन्ताः प्रसहाः पक्षिविशेषाः, प्रसह्य बलाद्भक्षयन्तीति प्रसहाः । तत्र शशघ्नी शशहारिणी, भासो गृध्रविशेषः तल्लक्षणं, "भस्मवर्णः स्वल्पतुण्डः प्रसहो गोष्ठगोचरः । भासश्चारुणातिगृध्रविशेषः परिकीर्तितः—" इति, कुररो हस्तमत्स्यग्राही, तल्लक्षणं,—" कुररः कुललोऽतिवेगभागरुणाभः सितवर्णमस्तकः । सलिलात्तरमानयत्यसौ शकुलांस्तद्धनिजातसाध्वसान्" इति, गृध्रः प्रसिद्धः, चीरिल्लश्चिल्लः, वायसः काकः, कङ्कः "कङ्कः स्यात्कङ्कमल्लाख्यो बाणपत्त्रार्हपक्षकः । लोहपृष्ठो दीर्घपादः पक्षाग्रः पाण्डुवर्णभाग्"-इत्युक्तः, उलूकः काकशत्रुः, श्येनः सञ्चाणः, चाषः प्रसिद्धः, धूमिका धूम्याटः, मधुहा प्रसिद्धः । मूषकाद्याः पूतिघसाद्यन्ताः पर्णमृगाः, पर्णशब्दः शाखोपलक्षणः, तत्र मृग्यन्त इति पर्णमृगाः।तत्र मूषको वृक्षपर्णोन्दुरः, वानरो मर्कटः, गोलाङ्गूलो वानरविशेषः, द्रुमशयो वृक्षमर्कटः, मद्गुर्माङ्गुयासर्पः, पूतिघसः सुगन्धिवृषणो मार्जारः, आदिशब्दात्पक्षमार्जारादयः । श्वेताद्याः लोपाकाद्यन्ताः बिलेशयाः, ' बिलेषु शेरते ' इति बिलेशयाः । श्वेतः श्वेतवर्णः, श्यामः श्यामवर्णः, चित्रपृष्ठो विचित्रपृष्ठः, कालकः कृष्णवर्णः, एवं चतुर्धा काकुलीमृग इति वाप्यचन्द्रः, पञ्चापि मृगजातय इत्येके मेको मण्डूकः। चिल्लकश्चिल्लीतको धूसरवर्णो बिडालजातिः।कूर्चिका सत्कषः? वभ्रुर्महानकुलः। प्रियको मृगप्रियकः तल्लक्षणं "तुरङ्गपुच्छाकृतिकृष्णपुच्छः प्रान्ते स्मृतः कर्बुरितोदरोऽसौ। कृष्णो मुखे खादिरपृष्ठभागो मृगप्रियोऽसौ शुनकस्तरस्वी" इति। शण्डको गोधानुकारी। कदली सर्पविशेषः, महाबिडालसमो व्याघ्राकारो मृगविशेष इत्येके, नकुलः प्रसिद्धः, श्वावित् शूल्यावृता सेहिकाख्या, मौ-

लोमशवर्णः,खण्डो गोधेरकः। तल्लक्षणम्,-"कृष्णसर्पेण गोधायां जातः सर्पश्चतुष्पदः। स वै गोधेरको नाम तेन दष्टो न जीवति" इति। "जाहको गात्रसंकोची मंडलीयो बुधैः स्मृतः"-इत्युक्तो जाहकः, मार्जारः ग्राम्यमार्जारः, अजगरो महासर्पः, अहिः सर्पः, आखुरुन्दरकः, लोपाको लोगडाख्यः शृगालभेदः, एतत्सर्वं वातघ्नं पित्तश्लेष्मकरं च ॥ १९–२६ ॥—

वातघ्नी पित्तला चाल्पकफा चाप्याक्षकी सुरा ॥२७॥

बिभीतककल्ककृताक्षिकी सुरा सा वातघ्नी पित्तकरी किंचित् श्लेष्मकरी च ॥ २७ ॥

वातघ्नमकफं पित्तकरं तैलं तिलोद्भवम् ॥

तिलतैलं वातघ्नं कफोदासीनं पित्तलं च ॥—

मारुतघ्नं चाल्पपित्तं श्लेष्मलं पक्वमारुकम् ॥२८॥

पक्वमारुकं पक्वं यदारुकं तन्मारुतघ्नं श्लेष्मलं किंचित् पित्तकरं च ॥ २८ ॥

अनिलघ्नं कफकरमल्पपित्तमुदाहृतम् ॥

सामुद्रलवणं मत्स्यो रोहितः प्रस्रुतं दधि ॥२९॥

सामुद्रलवणं प्रसिद्धम्। रोहितो "रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षकः। कृष्णपृष्ठः सर्वमत्स्यश्रेष्ठो रोहितकः स्मृतः" इत्युक्तो मत्स्यः। प्रस्रुतं वस्त्रगालितं दधि। एतत् त्रयं वातघ्नं श्लेष्मलं किंचित्पित्तलं च ॥ २९ ॥

मसूरगोधूमलकुत्थमुद्गजो

यूषोऽजजोऽपित्तकफो चलापहौ ॥

मसूरादिभिर्मिलितैश्चतुर्भिः सिद्धो यूषः, अजजः छागजः, एतौ द्वौ वातघ्नौ पित्तकफोदासीनौ। ननु सुश्रुतेन यूषे लवणं प-

श्चमुक्तं, "मसूरमुद्गगोधूमकुलत्थलवणैः कृतः । कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते–" इति । तत्कथमत्र नोक्तं? ब्रूमः, यूषशब्देनैव लवणमाक्षिप्तं "पद्वम्लस्नेहादिसंस्कृतो धान्यनिःक्वाथो यूष" इति उच्यते, अकृतयूषोपि लवणमात्रेण संस्कृत एव ॥

पलाण्डुपक्वाम्रकुरङ्गलेण्डिके–
लानं त्वपित्तं कफकृत् समीरजित् ॥ ३० ॥

पलाण्डुरुक्तो पक्वमित्याम्रादित्रयस्य विशेषणम् । कुरङ्गलेण्डिकं कर्कटं, एलानं प्रसिद्धं, एतच्चतुष्टयं वातघ्नं पित्तोदासीनं श्लेष्मलं च ॥ ३० ॥

इति श्रीबोपदेवीये सिद्धमन्त्रप्रकाशे वातघ्नो वर्गः ॥ १ ॥

पित्तघ्नं चन्दनं रिङ्गः कदली काशकच्छुरे ॥
शुकनासा मांसरोहा नलिका मधुकर्कटी ॥३१॥
गुन्थो धातक्यम्बुपर्णी नदीमापतरूदके ॥
क्रोश्चादनं च कूष्माण्डं मज्जा वंशस्य रोचना॥३२
कुसुमं मातुलुंग्याश्च वरुणान्मुचकुन्दतः ॥
रत्नानि चन्द्रकान्ताम्बु शीताम्भः पङ्कशैवले॥३३
सिताद्राक्षेक्षुरसवान्मन्थः सिद्धामिषं घृते ॥

चन्दनं श्रीखण्डम्। रिङ्गो रक्तावीजः।रम्भा कदली।काशः काशेक्षुः। कच्छुरा कांसुळी फाणिहा। शुकनासा शुकाह्वा। मांसरोहा मांसरोहिणी। नलिका कपोतचरणा। मधुकर्कटी मातुलुङ्गजातिः।गुन्थो तृणः।धातकी धातुपुष्पी। अम्बुपर्णी जलमयी। नदीमापो यानरिका; नन्दी जलतुण्डिकेरी, मापो जलमार्गुक इत्यन्ये,तरूदकं कस्तारम्। क्रोश्चादनं येघुलिका। कूष्माण्डमज्जा कूष्माण्डकस्य मज्जा। वंशस्य रोचना वंशरोचना । मातुलुङ्ग्यादीनां त्रयाणां कुसुमम्।

मातुलुङ्गं बीजपूरकः । वरुणः सेतुवृक्षः । मुचकुन्दो हिचकुन्दः । रत्नानि माणिक्यादीनि । चन्द्रकान्ताम्बु चन्द्ररश्मिसंयोगजं जलम् । शीताम्भः शीतोदकम् । पङ्कः कर्दमः । शैवलः शैवालः । सिता शर्करा । द्राक्षाया इक्षोश्च रसः, एभिस्त्रिभिर्युक्तो मन्थः । घृते सिद्धा मिषं सर्पिषि विपक्वं मांसं, एतत्सर्वं पित्तहरम् ॥ ३१-३३ ॥-

पित्तजिद्वातजननं शिपिस्त्ववशिरात्फलम् ॥३४॥
पनसस्य फलं त्वामं तडागाम्भो-

शिपिः गुन्द्रा । अवशिरः सूर्यावर्तः । तस्मात् फलं, गजपिप्पल्याकारः फलमयशेष इत्यन्ये । पनसः कण्टकिफलः, तस्यापक्वं फलम् । तडागाम्भस्तडागोदकम् । एतच्चतुष्टयं पित्तघ्नं वातकरं च ॥३४॥-

ऽथ पित्तजित् ॥

श्लेष्मकृच्छाल्मली मध्ये कूष्माण्डत्रपुसे तथा ॥ ३५॥
शाल्याद्याप्यं नदानूपाम्भसी दुग्धं शृतं हिमम् ।
पित्तजिद्वातकफकृन्माषकं माणनाडिके ॥ ३६ ॥

शाल्मली तूलिनी । कूष्माण्डत्रपुसे मध्ये मध्यावस्थे नातिमृदुनी नातिजरठे, कूष्माण्डं कूष्माण्डीफलं, त्रपुसं वालकम् । शाल्याद्याप्यं जलज शाल्यादिधान्यं, नदानूपाम्भसी नदानूपोदके, दुग्धं शृतं हिमं क्वथितशीतं क्षीरं, एतत्सर्वं पित्तजित् श्लेष्मकरं च ॥३५॥३६॥

आलुकानि च केलूटं शृङ्गाटककसेरुके ॥ ३७॥
अलाबुनालिका यूथी काष्ठेक्षुः स्थलकन्दकः ॥
ढुण्ढणः पद्मकन्दादिर्भल्लातकुसुमं तथा ॥
बालं त्रपुसकालिङ्गककर्कार्वेर्वारुजं फलम् ॥३८
नीवाराः करकातोयं तैलमेकोषिकोद्भवम् ॥
फल्गु वातकफं बिम्बी त्वकफा पित्तजिद्द्वयम् ॥३९

मार्पकं माठकम् । माणः महापत्रो यथापूर्वमधः पत्रत्यागी कन्द विशेषः । नाडिका तस्यैव नाडी, अलाबुनाडिका अलाबोस्तुल्या नाडिका नाड्याकारोऽवयवः। यूथी नीलपुष्पी। काष्ठेक्षुरतिकठिण इक्षोर्भेदः। स्थलकन्दो ग्राम्यकन्दः, ओलंक इत्येके । आलुकानि पिण्डालुकमध्वालुकहस्त्यालुककाष्ठालुकरक्तालुकादीनि । "केलूटं स्वल्पविटपं कन्दे तरस्यादुग्रतिलम्। कोविदेन तुलोकेन केलूट इति भण्यते इत्युक्तं केलूटं,जले दुर्वारिकेत्येके।शृंगाटकस्त्रिकोणजलकन्द कसेरुकं कृष्णः सूक्ष्मो वर्तुलो लोमशः कन्दः। ढण्ढणो वृकधूमकः। पद्मकन्दादिकं कमलस्य कन्दमूलनालपत्रादिकम्। भल्लातकुसुमं भल्लातफलस्यास्थिवर्ज्यो भागः । बालमिति त्रपुसादिनां चतुर्णां विशेषणं; त्रपुसं वालुकं, कलिङ्गकं कालिन्दं, कर्कारु लघुकूष्माण्डं, लघुकालिंगमित्येके, दीर्घालाबुकं फलविशेष इत्यन्ये, एर्वारु कर्कटीफलम्। नीवाराः वनव्रीहयः। करकातोयं वर्षोपलोत्थमुदकम् ।एकैषिकोऽयं तैलं एकैषिका पाठा, त्रिवृदिति जेज्जटादिः, एतत्सर्वं पित्तघ्नं वातश्लेष्मकरं च । फल्गु काकोदुंबरीकाफलं, तद्वातश्लेष्मोदासीनम्। बिम्बिस्तुण्डिकेरी, सा वातकफोदासीना, एतद्वयं पित्तघ्नं च ॥ ३६ ॥ ३९ ॥

पित्तघ्नं श्लेष्मलावातकृत्पालंक्या तु कुन्तली ॥

पालङ्क्या वास्तुकसदृशी चीरितपत्रा शाकविशेषः, उपोदकाभेद इत्येके। कुन्तली चुञ्चुसदृशी दीर्घपत्रः शाकविशेषः, चिरपोटी इत्येके, सूक्ष्मतिलजातिरित्यपरे, एतद्वयं पित्तघ्नं श्लेष्मोदासीनं वातलं च ।—

इति श्रीबोपदेवीये सिद्धमन्त्रप्रकाशे पित्तवर्गः ॥ २ ॥

कफघ्नं शालरोहीतच्छागकर्णाश्वकर्णकाः ॥४०॥
शमीकदम्बबदरीशिंशिपाकर्णिकारिकाः ॥

हरिद्रकोऽरिमेदश्च तिलकः कटभीङ्गुदः ॥ ४१ ॥
मदनस्तुवरश्चैव धत्तूरः केतकी तथा ॥
कोशातकी देवदाली काकतुंड्याखुकर्णिका ४२
नन्दिकामुकमञ्जिष्ठास्वरसीपर्वपुष्पिकाः ॥
विष्णुक्रान्ता धनहरी लताकस्तूरिका त्रुटी ॥४३
कर्पूरो जातिपत्री च कुलत्थी काककुष्ठकम् ॥
शिलापुष्पं तुत्थकं च शिलाजतु मनःशिला ४४
शाल्यादि दग्धभूम्युत्थमोदनो भ्रष्टतण्डुलैः ॥
वाटो धाना यवापूपा उल्लकक उल्लम्बुकः ॥
यूपो गजाश्वोष्ट्रघृतं मन्थो द्राक्षामधुप्लुतः ॥ ४५

शालो राजवृक्षः। रोहीतो रोहितकः । छागकर्णः कुशरीरः। अश्वकर्णः सस्यसंवरः 'पन' इति प्रसिद्धः। शमीः सक्तुफला, कुत्सिताम्र: कदम्बः, बदरी कोली, शिंशिपा कृष्णसारः। कर्णिकारिका कर्णिकारद्रुमः। हरिद्रकः प्रसिद्धः। अरिमेदो अहिमारः। तिलकः स्त्रीवीक्षणदोहदः। कटभी किणिही। इङ्गुदस्तापसतरुः। मदनः गालवृक्षः। तुवरः "पत्रैस्तु बकुलाकारः कलायसदृशः फलैः। वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः–" इत्युक्तः। धत्तूरः उन्मत्तः। केतकी प्रसिद्धा। कोशातकी धामार्गवः। देवदाली जीमूतकः। काकतुण्डी वायसनासा। आखुपर्णी मूषकपर्णी। नन्दिकामुकः प्राचीबलः। मञ्जिष्ठा योजनवल्ली, स्वरसी कपित्थपर्णी, पर्वपुष्पिका नागदन्ती। विष्णुक्रान्ता प्रसिद्धा। धनहरी चण्डी। लताकस्तूरिका प्रसिद्धा। त्रुटी सूक्ष्मैला। कर्पूरो घनसारः। जातिपत्री जातिकोशः। कुलत्था वनकुलत्थः। काककुष्ठकं कङ्कुष्ठम्। शिलापुष्पं

शैलेयम् । सूर्यक मयूरग्रीवम् । शिलाजतु गिरिजम् । शाल्यादि दग्धभूम्युत्थ दग्धाया भुवि जात शाल्यादि धान्यम् । ओदनो भ्रष्टतण्डुलैः सिद्ध । वाटो दलितगोधूमादिकृत ओदन, भ्रष्टय वौदन इत्येके । धाना भ्रष्टयवा । यवापूपा यवकृतमण्डका । उल्लुकको भ्रष्टहरितधान्यशिम्ब । चलुम्बकः भ्रष्टशूकधान्यजः । यूषो व्याढ्यातः । गजाश्वोष्ट्रघृत गजाश्वोष्ट्रसभव घृतम् । मन्थो द्राक्षामधुद्रुतः द्राक्षारसमाक्षिकाभ्यामालोडितो मन्थ । एतत्सर्वं कफमम् ॥ ४०–४५ ॥

श्लेष्मघ्नं स्याद्वातलं रक्तशिग्रोः पुष्पाङ्कुरौ दध्यपि स्याद्धयनाम् ॥

रक्तशिग्रो पुष्प, तस्यैवाङ्कुर, अश्वीना दधि चेति त्रय कफहर वातकर च ॥

स्याच्छ्लेष्मघ्नं पित्तलं ब्रह्मसोमा क्षाराः सीरी वज्रकन्दः कुसुम्भः ॥४६

ब्रह्मसोमा देवामिका । क्षारा क्षारविधिकृतान्यौषधभस्मानि, सीरी लाङ्गली, वज्रकन्द सुरेन्द्रकन्द, कुसुम्भः कुसुम्भशाक, एतत्पञ्चक कफम पित्तकरं च ॥

कफघ्नं पित्तकृद्द्रोणपुष्पी चापि कुरुण्टिका ॥४६॥
प्रपुन्नाटो वेणुयवा निष्पावाः पक्वचिर्भिटिः॥४७
शिम्ब्यो द्रावी च माधूकफाणितं पौतिकं मधु॥
आसवाः सधिवः पक्वशीतमाधूकजाम्बवाः॥४८॥

द्रोणपुष्पी कुम्भी । कुरुण्टिका शितिवार । प्रपुन्नाट एडगज । वेणुयवा वशजा यवा । निष्पावा वल्याः । पक्वचिर्भिटि पक्वङ्गरम् । शिम्ब्य प्रसिद्धा, यत्सबन्धान्मुद्गादीना शिम्बिधान्यवत्त्वम् ।

द्रावी स्मृतः' । माधूकफाणितं मधूककुसुमोत्थं फाणितम् । पौतिक मधु "यत् कृष्णा मशकोपमा लघुतरा प्रायो महापिण्डिका चिन्वानास्तरुकोटरान्तरगता पुष्पासवं कुर्वते । तास्तज्ज्ञैरिह पूतिका निगदितास्ताभिः कृतं पौतिकं, मध्वाज्याभमुशन्ति पौतिकमिति ख्यातं नराश्चापरे" इति । आसवो द्रव्याण्यासुत्य कृतं मद्यम् । पक्वापक्वभेदाच्चत्वारः सीधवः ॥ ४७ ॥ ४८ ॥

कफकृद्वातलापित्तं वेणुपत्री गवेधुका ॥
लोहित्यः शिविरोद्दालो जूर्णाह्वो घुणपाद्यणुः ४९
कुरुविन्दो ब्रह्ममूर्तिर्विरुको वरकोत्कटौ ॥
हस्तिश्यामाकपानीयश्यामाकशरनाडिकाः॥५०
झिंटीमुकुन्दगर्मोटीकुम्भीकाः सप्रशान्तिकाः ॥
तोदपर्णी शिम्बिरादि कुधान्यानीक्षुजासवः ५१

वेणुपत्र्यादीनि शिम्बिराद्यन्तानि कुधान्यानि । कुधान्यं तृणधान्य, तत्र वेणुपत्री वेणुपत्रसदृशपत्रा । गवेधुका वार्षिकी । लोहित्यो लोहितको रक्तनालः कषायोत्कटः । शिम्बिरस्तीरभुक्तौ प्रसिद्ध, स एव मगधे सिल्हक । उद्दालो वनकोद्रवः । जूर्णाह्वो जवनालः । घुणपादी नर्तनक । अणुरणुक । कुरुविन्दो मौहिगुरु । ब्रह्ममूर्तिः प्रसिद्धा । विरुकः शरबीजम् । वरको वरदाढक, उत्कटो लोहितपगलबीजम् । हस्तिश्यामाक श्यामिका । पानीयश्यामाको जलश्यामाक । शर शरकार्णिका । नाडिका नाल्याकारा । झिंटि पाण्डुकर्कशा । मुकुन्दो मूलकन्द । गर्मोटी गर्मोटिका । कुम्भिका कुरुम्बकाकारा । प्रशान्तिका एकशूकोपशुण्डिका । तोदपर्णी तोयपर्णी । शिम्बिरो बहुशिम्बः । आदिशब्दादन्यान्यप्येवंविधानि । इक्षुजासव इक्षुरसजासव । एतत्सर्वं कफम वातकरं पित्तोदासीनं च ॥ ४९-५१ ॥

श्लेष्मघ्नं पित्तलावातमौद्दालं मधु माधवः ॥
माद्वीकमदिरासवाविति द्राक्षासुराद्राक्षासवौ, श्लेष्मघ्नौ किंचिद्वातपित्तकरौ ॥ ९२ ॥

कफघ्नाल्पमरुत्पित्तौ माद्वीकमदिरासवौ ॥ ५२॥
औद्दालं मधुविशेषः "प्रायो वल्मीकमध्यस्थाः स्वल्पाः कपिलकीटकाः । कषायतिक्तं निघ्नन्ति स्वल्पमौद्दालकं मधु–" इति। माधवो मध्यासव । एतद्द्वयं कफघ्नं पित्तकरं वातोदासीनं च॥–

खर्जूरमद्यं कफजिद्वातकृन्नातिपित्तलम् ॥
खर्जूरफलकृतं मद्यं कफघ्नं वातकरं किंचित्पित्तकरं च ।

अरिष्टस्त्वमरुत्पित्तो मेषीघृतमपित्तजित् ॥५३॥
द्रव्याणि निःकाथ्य कृतं मद्यमरिष्टः, स पित्तवातोदासीनः । मेषीघृतं पित्तोदासीनम् ॥ ५३ ॥

आजमूत्रं त्वल्पचलं पित्तकृत्, श्लेष्महृत्त्रयम् ५४
आजं मूत्रं किंचिद्वातघ्नं पित्तलं च । एतत् त्रयं श्लेष्मघ्नम् इति वोपदेवीये सिद्धमन्त्रप्रकाशे कफघ्नवर्गः ॥ ९४ ॥

वातपित्तहरं शाकवृक्षो यष्टी शतावरी ॥
कपिकच्छुर्वृश्चिकाली प्रियङ्गुः पर्वणी मुरा॥५५
नेपाली कुक्कुटी हंसपादी लामज्जमल्लिका ॥
मञ्जिष्ठानागदन्त्योस्तु शाकं पुस्तकशिम्बिका ॥ ५६
मुञ्जातं कोलमाधूके पक्के द्राक्षाकराम्लके ॥
शुष्के मज्जाः कोलचारकोशाम्रारग्वधलङ्कजाः ॥५७
तालधात्र्योश्च रक्तेक्षु रजतं लाजसक्तवः ॥
भक्ष्याः सवेसवाराज्यसिद्धसामितफेनकाः ॥५८

घोलसौरावखानिष्काः संतानी मांसजो रसः ॥
नारिकेलोदकं स्वादु वापीवार्यौद्भिदं जलम् ॥५९
वर्तिकावर्तकेन्द्राभो गोर्नदी गिरिवर्तिका ॥
वरशुरः सारपदो वरकः कुकुभारटो ॥ ६०॥
मयुरः शतपत्रश्च कुक्कुटश्चेति विष्किराः ॥

शाकवृक्षः खरपत्रः । यष्टी यष्टीमधु । शतावरी प्रसिद्धा । कपिकच्छुरात्मगुप्ता । वृश्चिकाली अप्रिकः । प्रियङ्गुः गन्धद्रव्यम् । पर्वणी शाकविशेषः । मुरा गन्धकुटी । नेपाली नवमल्लिका । कुकुटी ' कुक्कुटाण्डनिभैः कन्दैः किंचित्कटुकपिच्छिलैः । स्निग्धैर्मरकतच्छायैः सर्जूरीसदृशच्छदैः '–इत्यष्टाङ्गसंग्रहोक्ता । हंसपादी त्रिपादी । लामज्जमल्लिके प्रसिद्धे । मञ्जिष्ठाशाकं नागदन्तीशाकं च । पुस्तकशिम्बिका पुस्तकाकारा शिम्बी । मुञ्जातं कन्दविशेषः । कोलमाधूके पक्वे कोलं बदरीफलं, माधूकं मधुकफलम् । द्राक्षाकराम्लके शुष्के द्राक्षा गोस्तनी, कराम्लं करमर्दकम् । कोलादीनां धात्र्यन्तानां मज्जा; तत्र कोलं बदर, चारं पियालं, कोशाम्रं लाक्षावृक्षफलं, आरग्वधः शम्याकफलं, लुङ्गं मातुलुङ्गं, तालं तालकफलम्, धात्री आमलकम् । रक्तेक्षुः लोहितेक्षुः । रजतं रूप्यम् । लाजसक्तवो लाजानां सक्तवः । वेसवारादयश्चत्वारो भक्ष्याः । तत्र वेसवारो वेसवारगर्भः, वेसवारो व्याख्यातः, 'निरस्थिपिष्टो मुद्गादिकल्को वेसवार ' इत्येके, ' पिप्पलीशुण्ठीमरीचधान्यकाजाजिदाडिमम् । पिप्पलीमूलसंयुक्तं वेसवार इति स्मृत.'–इत्यन्ये, ' पिप्पलीमरिचं विश्वं सर्पिर्गुडसमन्वितम् । एकत्र योजितं सर्वं वेसवार इति स्मृत.'–इत्यपरे । आज्यसिद्धो घृतपकः । भावितः

कोनीलरोहणीमिद्रुक्रौञ्चाया जलपक्षिणः ॥७२॥
चुलुकीकूर्मकुम्भीरशिशुमारोदकर्कटाः ॥
नक्रादयः पादिनोऽथ शङ्खशम्बूकशुक्तयः ॥७३
कपर्दकः शङ्खनको भल्लूकाद्याश्च कोशिनः ॥

ताळहस्तालहस्तः । नरपुष्पको नरफुछः । मेदे महामेदा, मेदा
च । विदार्यौ विदारी क्षीरविदारी च । काकोल्यौ काकोली
क्षीरकाकोली च । वृष्यर्द्धी वृद्धिः ऋद्धिश्च । जीवकर्षभौ
जीवको ऋषभश्च । फलम्बुराकम्चुटकौ जलशाकविशेषौ ।
क्षीरपलाण्डुः सक्षीरो मधुरः पलाण्डुभेदः । लक्ष्मणा रक्तबिन्दु-
च्छदा । उपोदका उपोदकी । सूर्यपर्ण्यौ मुद्गपर्णी माषपर्णी च ।
पुष्पं मधूकजं मधूककुसुमं फलचतुष्टयम् । लुङ्गमांसं मातुलुङ्गस्य
त्वक्केशरवर्जितो मध्यभागः । त्र्यक्षादीनां फलमग्रजश्च । तत्र
त्र्यक्षो नारिकेलः, तालो दीर्घतरुः, खर्जूरी स्वादुमस्तकः ।
आदिशब्दादन्येऽप्येवंविधाः । अग्रजो मस्तकमज्जा । रम्भादीनां
त्रयाणां फलं; तत्र रम्भा कदली, अक्षोटोऽक्षोटः, चारः पि-
यालः, सौवीरं मरुदेशजं मधुरं महद्बदरम् । पाकिममिति
मृद्वादेः फलषट्कस्य विशेषणम् । मृद्वमुत्तरापथजं, द्राक्षा
गोस्तनी, आम्रातमाम्रवाटं, शेलु श्लेष्मातकं, पनसः कण्टकि-
फलः, करमर्दकं कराम्लकम् । पाकिमं पक्वम् । बालं कोमलं कू-
ष्माण्डम् । खण्डमत्स्यण्डीगुडा इक्षुविकाराः उक्तंच,–'इक्षो र-
सस्य सलमत्र्यंशार्धाद्विमलामलाः । विकाराः फाणितगुड-
मत्स्यण्डीखण्डशर्कराः–'इति । सट्टकः "लवङ्गव्योपखण्डैस्तु दधि
निर्मथ्य गालितम् । दाडिमबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् । सट्टकं
तु समोदाख्यं नलादिभिरुदाहृतं–' इत्युक्तः । क्षीरादिभिः
कृता भक्ष्याः । तत्र क्षीरं दुग्धं, क्षौद्रं मधु, सिता शर्करा । शाकं

कूष्माण्डादि । इक्षु गुडकाण्डम् । घृतपूरक 'मर्दित समिता-पिण्ड पयसालोड्य साधित । घृतावगाहित पक्व स्यादेष घृत-पूरक —" इत्युक्त: । नवनीतघृतक्षीराणि प्रसिद्धानि । शृतक्षीर-जमाहिषे दधिनी, शृतक्षीरज कथितक्षीरज, माहिष महिषी-क्षीरजम् । दधि सम्भेतं शर्करामिश्रित दधि । तक्र स्वादु मधुर तक्रम् । इक्षुजो रस इक्षुरस । भूनिम्बादीनां त्रपुसान्तानां तैल, तत्र भूनिम्ब: किराततिक्त, शेलु श्लेष्मान्तका, अक्षो बिभी-तक कोल बदर, अक्षोट कर्पराल., अतिमुक्तो माधवी, चार. पियाल, अर्कवल्ली आदित्यभक्ता, जीवन्ती स्वर्णजीवन्ती, नारिकेलहृयक्ष, मधुको मधुरद्रुम, कर्कारु व्याख्यात, एर्वारु कर्कटी, कूष्माण्ड पुष्पफले, कालिङ्ग कालिन्द, त्रपुस वालुकं; आदिशब्दादन्यान्यप्येवंविधानि । एपा फलमज्जात प्रा यस्तैलमुत्पादयन्ति । कुलिङ्गकुक्कुटौ ग्राम्यौ कुलिङ्गश्चटक', कुक्कुटस्ताम्रचूड, ग्राम्यौ ग्रामचारिणौ । गोधा पण्ड । गवयादय सृमरान्ता महामृगाः आरण्या पशव । तत्र गवयो गवाकार: सास्नाककुदरहित । रौतीति रुरु, तल्लक्षण, 'विकटबहुविषाण शम्बराकारदेह सलिलतटच-रत्वाच्छम्बरेभ्यो विभिन्न ॥ त्यजति शरदि शृङ्ग रौत्यतोऽसौ रुरु स्यात् प्रचुरमृगविशेषः माघवश्चेदिदेशे" । वन्यो गौ-ररण्यचरो गोभेद. । चमर केशमृत्यु गोसदृश । रोही रोहीतक । सृमरो मत्स्याकारश्चमरसदृश वेगवान्, महाशूकर इत्येके । आदिशब्दादन्येऽप्येवंविधा । हंसाद्या क्रौञ्चान्ता. जलपक्षिण । हंसो मानसौका:, सारसो लक्ष्मण, कादम्ब कलहंसो धूसरपक्षः, बक पाण्डुर क्षुद्रमत्स्याद, कारण्डव काकवक्त्रो दीर्घाङ्घ्रि कृष्णवर्ण, क्रौञ्चो महाप्रमाणप्रसेवगल, मृणालकण्ठ कालकराक, चक्राह्वश्चक्रवाक, बलाका बिस-कण्ठिका, रक्तशीर्षको रक्तशिरा सारसभेद । 'नन्दीमुख' स्यात्पत्राटी वृक्षचारी विहङ्गम । आटीभेदो रयुश्चित्रपर्ण-

समिताकृतो मण्डकादिः । समिता गोधूमचूर्णम् । फेनकोऽपूपविशेषः । तल्लक्षणं 'विमृद्य समितां शुष्कां विमलां नातिशर्कराम् ॥ सर्वेष्टनाय गर्भार्थं खरपाके घृते पचेत् । घृतपूरसमाकारं यथाभिमेतविस्तृतम् ॥ फेनकं फेनसंकाशं कुर्यात्सूपविधानवित्'—इत्युक्तः । घोलो दधिविकारः । उक्तंच,—'ससारासारपादार्धसमाम्बुमथितं दधि ॥ क्रमेण घोलमथिततक्रोदस्विात्सितोदकं'—इति । सौरावः स्वौरकः । तल्लक्षणम्,—'मांसं निरस्थि सुस्विन्नं वेसवारैस्सुसाधितम् ॥ सारितं शीतळं स्वच्छं धूपितः स्वौरकः स्मृतः'—इति । खानिष्कः परिशुष्कामिषभेदः, वेसवारामिषभेद इत्येके । अन्येत्वाहुः, 'सौरावस्तु स विज्ञेयो रसो योऽलवणस्तनुः ॥ स एव वेसवारेण मिश्रः खानिष्क उच्यते'—इति । संतानो क्षीरस्योपरितनो भागः । मांसजो रसः मांसजो मिःकायः । नारिकेळोदकं द्रवावस्थं नारीकेळं, तत्स्थं वा उदकम् । स्वादु वापीवारि मधुरदीर्घिकातोयम् । औद्भिदं जलं भूमिं ख्द्भिद्योर्ध्वं निर्गच्छद्वारि । वर्तिकादयः कुक्कुटान्ता विष्किराः । तत्र वर्तिका वर्तकसदृशी ततोऽप्यल्पा । वर्तको वार्तागदरूपस्तद्भेदो महान् । इन्द्राभः कङ्कभेदो विचित्रवर्णः । गोनर्दो गोनदः । गिरिवर्तिका वर्तिकाभेदः पर्वतचारी । वरशूरोऽत्यन्तशौर्यवान् । सारपदः कङ्कभेदः चारुगतिः । वरकः प्रसिद्धः । कुकुभः कुक्कुशब्दोच्चारी । आरटो घोरटी । मयूरः नीलकण्ठः । शतपत्रो दार्वाघाटः । तल्लक्षणं, 'दारुणामाहननाद्दार्वाघाटस्तु दीर्घचञ्चुशिराः । कर्बुरवर्णो लोके प्रथितोऽसौ काष्ठकुट्टकः पक्षी'—इति । कुक्कुटस्ताम्रचूडः । एतत् सर्वं वातपित्तघ्नम् ॥५९।६०

श्लेष्मलं वातपित्तघ्नं तालद्रूनरपुष्पकः ॥६१॥
मेदे विदार्यौ काकोल्यौ वृध्यर्द्धी जीवकर्षभौ ॥

कलम्बुकाकञ्चुटकौ तथा क्षीरपलाण्डुकः ॥६२॥
लक्ष्मणोपोदका सूर्यपर्ण्यौ पुष्पं मधूकजम् ॥
लुङ्गमांसं त्र्यक्षतालखर्जूरादेः फलाग्रजौ ॥ ६३
फलं रम्भाकोलचारसौवीरं चाथ पाकिमम् ॥
तूदद्राक्षाम्रातशैलुपनसं करमर्दकम् ॥६४॥
बालं कुष्माण्डकं खण्डमत्स्यण्डी गुडसट्काः ॥
क्षीरिक्षौद्रसिताशाकेक्षुभक्ष्या घृतपूरकाः ॥ ६५॥
नवनीतं घृतं क्षीरं शृतक्षीरजमाहिषे ॥
दधिनी दधि सश्वेतं तक्रं स्वाद्विक्षुजो रसः ॥६६
तैलं भूनिम्बशेल्वक्षकोलाक्षोटातिमुक्तजम् ॥
चाराकैयल्लीजीवन्तीनारिकेलमधूकजम् ॥६७॥
कर्कविंवारुकूष्माण्डकालिङ्गत्रपुसादिजम् ॥
कुलिङ्गकुक्कुटौ ग्राम्यौ गोधा च गवयो रुरुः॥६८
वन्यो गोश्चमरो रोही सृमराद्या महामृगाः ॥
हंससारसकादम्बवककारण्डवप्लवाः ॥ ६९ ॥
शृगालकण्ठचक्राह्वबलाकारक्तशीर्षकाः ॥
नन्दीमुखः काकतुण्डः सुमुखो मणितुण्डकः ७०
शराटिका घनारावः कोशकालयम्बुकुक्कुटी ॥
उत्क्रोश आरा भारुण्ड आटिः पुष्करशायिका ७१
पुण्डरीकाक्षकाचाक्षमल्लिकाक्षाश्वकेशरी ॥

मिश्राङ्गकाभिधः—' इत्युक्तलक्षणो नन्दीमुखः, काकतुण्डः वायसतुण्डः, सुमुख शोभनमुखो भारण्डभेदः, मणितुण्डः तरन्तः, शराटिका गर्गराटी खादिरवर्णा, घनागपश्चातकः, कोशकाली पद्मकोशनलिनी, अम्बुकुक्कुटी जलकुक्कुटी कृष्णवर्णा, उत्क्रोशः कुररभेदः, आरा आरामुखी, भारुण्डः सघातचारी, आटिः आटि, पुष्करशायिका पद्मशायिनी शैवालादा, पुण्डरीकाक्षः पद्मनेत्रः पद्मकन्दादः, काचाक्षमल्लिकाक्षौ ' स्थित्वा चिरं नमसि वीक्ष्य जलाशयान्तर्मत्स्य तत. पतति लोष्ठवदम्बुमध्ये । काचाक्ष एष कथितश्च कपर्दकाक्षः शुक्लाक्षशुक्लशबल स तु माल्लिकाक्षः—'इत्युक्तौ, केसरी सटावान्, कोनीलः श्यामपृष्ठः श्वेतोदरः पानीयवर्तिकाख्य, रोहिणी लोहितवर्णा, मद्गुजलकाक, क्रौञ्च. क्रौञ्चसंज्ञ । आदिशब्दादन्येऽप्येवंविधाः। चुल्लकीप्रभृतयो नक्रायन्ता पादिनो जलेशया, पादिनश्चरणवन्तः । तत्र चुल्लकी शिशुमारभेद स्वल्प, कूर्म कच्छपः, कुम्भीरो महानक्रसदृश, शिशुमारो द्रुत्याकारोऽन्तर्वल्को बहिर्निश्वासमुक्, उद्रो जलबिडालः, कर्कट कुलीरः, नक्रो रज्वाकार., आदिशब्दादन्येऽप्येवंविधा । शङ्खादयो भल्लूकायन्ताश्च कोशिनो जलेशयाः, कोशिनोऽस्थिमध्यस्था । तत्र शङ्खः कम्बुः, शम्बूकशुक्तिके प्रसिद्धे, कपर्दको वराटकः, शङ्खनकः क्षुद्रशङ्खः, भल्लूको महान् कपर्दकः, आदिशब्दादन्येऽप्येवंविधाः । एतत्सर्वं वातपित्तघ्नं कफकरं च ॥ ६१—७१ ॥—

वातपित्तघ्नमकफं चञ्चुहिस्फिज्जमोथिकाः ॥७४॥
पक्वं परूषकाश्मर्यपाटलासिञ्चतीफलम् ॥
गोधूमधान्यं च गुडो जीर्णधौतो सितोपला॥७५
पुष्पाम्भोऽथ कुरङ्गर्क्षश्वदंष्ट्रामशम्बराः ॥

करालः कृतमालश्च चारुष्कपृषतोरणाः ॥७६॥
वरपोतः कालपुच्छरङ्कुगोकर्णगोमृगाः ॥
मण्डमूलः कोट्टकारो राजीवशरभादयः॥ ७७ ॥
मृगाश्च कोरवर्तीककुरुवाडुयथालकाः ॥
सारङ्गनसृकारक्तवर्त्मवार्तिरिकुकुभाः ॥ ७८ ॥
कृतितित्तिरिश्चोपचक्रककराद्यास्तु विष्किराः ॥

चञ्चुर्नाडिकाकारपत्र । हिङ्गिफञ्जो बृहत्पत्रो मेथिकाभेदस्तुरुष्कप्रसिद्धोऽश्वभक्ष्य । मेथिका मेथी । पक्वमिति परुषादिफलचतुष्कविषयम् । तत्र परूषको मृदुफल, काश्मर्य श्रीपर्णी, पाटला वसन्तदूती, सिञ्चती उत्तरापथजा मुष्टिप्रमाणाऽतिमधुरफला बदरी । गोधूमाख्य शूकधान्यम् । गुडो जीर्णधौतो जीर्ण पुराणः, धौत शोधित । सितोपला शर्करा । पुष्पाम्भ सुरभिकुसुमाधिवासित तोयम् । कुरङ्गादय शरभाद्यन्ता मृगा । तत्र कुरङ्गस्ताम्राङ्ग । ऋक्षो नीलाण्डो राजाख्य । श्वदंष्ट्र 'चतुर्दंष्ट्रोऽतिदुष्टकर्पट ' इति कार्तिकेयपुरे प्रसिद्ध । रामो महान् पुरुषवर्णो हिमवति । शम्बरो विकटबहुविषाण । करालोऽधोनिष्क्रान्तदन्त कस्तूरीमृग । कृतमाल सघातचारी । चारुष्कः चारुस्वल्प । पृषतो विन्दुभिश्चित्रित । उरणो रूपक । वरपोत श्रेष्ठगावः । कालपुच्छ सीत्कारवः । रङ्कुर्हिण्डिपारः । गोकर्णो बहुबिन्दुः बहुशृङ्ग । गोमृगो गोसदृश । मण्डमूलो मलिनाङ्ग । कोट्टकारो घटकार । राजीवो महापर्ण । शरभ ' उष्ट्रमानो महाशृङ्गश्चतुर्भिश्चरणैरध । चतुर्भिश्चरणैरूर्ध्वं काश्मीरे शरभो मृग' इत्युक्त । आदिशब्दादन्येऽप्येवंविधा ज्ञेया । चकोरादय ककराद्या विष्किराः पक्षिणः । तत्र चकोरो रक्ताक्षो विषसूचक । वर्ति-

को वनचटकः स्वल्पसंघातचारी, कुक्वाहु कुक्कुरुकः । स एव वार्ध्राणसः । तल्लक्षणं,–' नीलग्रीवो रक्तशिराः शुक्लपक्षो विहङ्गमः । स वै वार्ध्राणस प्रोक्त इत्येषा नैगमीश्रुतिः'–इति । यथालकः "यथालकोऽसौ यवगाडिरेति लोके प्रसिद्धापरनामधेयः । कृष्णोदरः कर्बुरकृष्णवर्णशीर्षो भवेद्धूसरवर्णदेहः'–इत्युक्तः। सारङ्गः कृष्णशबलश्यामकाकारः । नप्तृका ' नप्तृका चटकास्याता लोके गद्दूचिकाभिधा । गुञ्जारकारिणी स्वल्पा पाण्डुरा पाण्डुरोदरा'–इत्युक्ता । रक्तवर्मा रक्तचरणो लावभेदः, स्थलचरकुक्कुभ इत्यपरे । वार्तिरिः स्वल्पकपिञ्जलसदृशः । कुक्कुभः ' नीलच्छविः कृष्णगलः स्याद्ग्रामचटकाकृतिः । कुक्कुभः कुक्कारावः स्थलजो रक्तवर्त्मकः'–इत्युक्तः । कुतिचिरिः पाण्डुकपिञ्जलतित्तिरिभेदः । उपचकश्चक्रदलः कृशचञ्चुमर्दाविलः, स्थलचक्रवाक इत्यन्ये । क्रकर 'क्रतिशब्दकरणात् क्रकरः स्यात्पीतकृष्णगललोहितपृष्ठः । कृष्णपादयुगचक्षुर्विभागरुपाद्दलेषु विहगः प्रथितोऽसौ" इत्युक्तः । आदिशब्दादन्येऽप्येवंविधाः । एतत्सर्वं वातपित्तघ्नं श्लेष्मोदासीनं च ॥ ७४-७८ ॥

इति बोपदेवीये सिद्धमन्त्रप्रकाशे वातपित्तघ्नवर्गः ॥

कफानिलघ्नं देवाह्वं हिंस्राकट्फलमुष्ककाः ॥७९॥
धर्मिणोऽग्मन्तसरलमधुद्रुपारिभद्रकाः ॥
स्नुही करीरवकुलौ करमर्दोऽम्लवेतसः ॥ ८० ॥
श्रीवेष्टको गुग्गुलुश्च करञ्जन्दनाङ्कुरौ ॥
पद्मकं सैर्यको रास्ना निर्गुण्ड्येरण्डमार्कवाः॥८१॥
वर्षाभू वपुषा मुण्डी तेजोवत्यश्वकन्दकः ॥
तर्कारीपाटलीबृहतीरामठीदेवसर्षपाः ॥ ८२ ॥

कालशाकोऽम्लिकाकन्दः स्निग्धसिद्धं च मूलकम् ।
कङ्कोलकुष्ठं कर्चूरतालीसं कोचपुष्करे ॥ ८३ ॥
जीरकं वाष्पिका वस्तमोदा मातङ्गपिप्पली ।
तुम्बरुः शतपुष्पा च भार्गी कालाञ्जनी वचा ८४
वत्सादनी कङ्गुणिका शेफाली वृद्धदारुकः ।
शिरीषिका कर्कटाव्हा फलमश्मन्तधन्वनात् ॥ ८५
पलाशवेल्लेभवलामिश्रेयाजातिमूलकात् ।
पक्वं वृक्षाम्लकोशाम्रत्रपुषं शुष्कमाम्रकम् ॥ ८६
मज्जाऽक्षादस्थिभल्लाताल्लुङ्गास्त्वग्बीजकेसरम् ।
कुन्दुरुर्विडकासीसं गोरुचिर्मृगजा नखम् ॥ ८७
पक्व इक्षो रसो वाप्यम्बूष्णाम्भः शैशिरं जलम् ।
दुग्धं शृतोष्णं करभीक्षीरं कारेणवं दधि ॥ ८८ ॥
तक्रं च कूर्चिका मस्तु तैले एरण्डनिम्बजे ॥
कुलत्थैस्तत्कोलयवैर्यूषः काम्बलिकः खलः ॥ ८९ ॥

देवाह्वो देवदारुः । हिंस्रा कन्थारी । कट्फलः सोमवल्कलः । पुष्करो पोक्षः । घार्मिणो धन्वनः । अश्मन्तोऽम्लोटजः । सरलश्रीडा । मधुको मधुद्रुमः । पारिभद्रः कण्टकाकिंशुकः । स्नुही समन्तदुग्धा । करीरो गूढपत्रः । वञ्जुलो मधदोदः । करम्दीं क्षीरफला । अम्लवेतसो वेतसाम्लः । श्रीवेष्टकः श्रीवासः । गुग्गुलुर्महिषाक्षः । करञ्जच्छदनाङ्कुरो करञ्जो नक्तमालस्तस्य छदनं पत्रं, तस्यैवाङ्कुरोऽभिनवोद्भेदः । पत्रकं गन्धपत्रकम् । सैर्यकः कुरण्टकः । रास्ना एलापर्णी । निर्गुण्डी सिन्दुवारकः ॥

एरण्डः पञ्चाङ्गुलः । मार्कवो भृङ्गराजः । वर्षाभूः पुनर्नवा । हपुषा विषा । मुण्डी कुलःलः । तेजोवती तजोह्वा । अश्वछन्दा अश्वगन्धा । तर्कारी अग्निमन्थः । आघाटो अपामार्गः । बृहती सिंही । रामठी काण्डीरभेदः । यदाह वाप्यचन्द्रः,—" हरितो द्विविधः मोक्तो काण्डीरस्तत्वदर्शिभिः । कटुकं कटदेशादौ भक्षयन्त्यामेव तु ॥ द्वितीयस्तु दर्षोद्भवो रामठेति च गीयते " इति । देवसर्षपो गौरसर्षपः । कालशाकः कालिकाशाकः । अम्लिकाकन्दः " अम्लिका स्वल्पविटपा सुकुमाराल्पनाडिका । प्रायेण कामरूपादौ तत्कन्दश्चार्शसे हितः " इति वाप्यचन्द्रोक्तः । स्निग्ध सिद्धं च मूलकं स्नेहपक्वं मूलकं हरित्पर्णम् । कङ्कोलं कटुकफलम् । कुष्ठं पाकलम् । कर्चूरः शठी । तालीसं तालीसपत्रम् । चारश्चारकः । पुष्करं पुष्करमूलम् । जीरकमजाजी । वाष्पिका हिङ्गुपत्री । अजमोदा वस्तमोदा । मातङ्गपिप्पली गजपिप्पली । तुम्बुरुः तीक्ष्णत्वक् । शतपुष्पा मिसी । भार्गी द्विजयष्टिः । कालाञ्जनी नीली । वचा उग्रगन्धा । वत्सादनी सुदर्शनी । कङ्गुणि ज्योतिष्मती । शेफाली पुष्पवर्षिणी । वृद्धदारुको वेल्लरी । तल्लक्षणमष्टाङ्गसंग्रहे,—"त्रिकोणकाण्डा सुबहुमताना फलेषु पीता कुसुमेषु रक्ता । पत्रैः सुदुग्धैर्मृदुरोमवद्भिस्ताम्रमूलतुल्यैर्घनमूलकन्दैः"—इति । शिरीषिका दण्डणिका । कर्कटाह्वा कर्कटशृङ्गी । अश्मन्तादीनां मूलकान्तानां फलम् । तत्राश्मन्तोऽम्लोटजः । धन्वनो धर्मणः । पलाशः किंशुकः । वेल्लं विडङ्गम् । इभवल्ली नागवल्ली । मिश्रेया मधुरिका । जाती मालती । मूलकं हरित्पर्णम् । पक्वमिति वृक्षाम्लादिफलत्रयविशेषणम् । तत्र वृक्षाम्लं तिन्तिडीकं, कोशाम्लं छाक्षाकृष्टफलं, त्रपुसं वालुकम् । शुष्कामाम्रं शुष्कचूतफलम् । मल्लातकाद्भिनीतमज्जा । आस्थि भल्लातास्थिानकास्थि । लुङ्गा-

त्वग्बीजकेसरं मातुलुङ्गस्य त्वग् बीजं केसरं च । कुन्दुरुः शल्लकीखपुरः । विडं विडलवणं, कासीसं धातुकाशीसम् । गोरोचिः गोरोचनः । मृगजा कस्तूरी । नखं गन्धनखम् । पक्व इक्षो रसः । वाप्यम्बु दीर्घिकाजलम् । उष्णाम्भः क्वाथोष्णमुदकम् । शैशिरं जलं शिशिरर्तुसंबन्धादुत्पन्नातिशयशैत्यं भौमं तोयं, दिव्यस्यानार्तवत्वदोषात् । दुग्धं शृतोष्णं क्वथितं कोष्णं क्षीरम् । करभीक्षीरं उष्ट्रीदुग्धम् । कारेणवं दधि हस्तिनीदधि । तक्रं कालसेयम् । कूर्चिका कूर्चामण्डः । मस्तु दधिमण्डः । तैले एरण्डनिम्बजे एरण्डफलनिम्बफलतैले । कुलत्थैः कृतो यूषः, तत्कोलयवैर्यूषः कुलत्थबदरयवजो यूषः । काम्बलिको व्याख्यातः, खलश्च । एतत्सर्वं श्लेष्मवातहरम् ॥ ७९–८९ ॥

पित्तलं कफवातघ्नं वरुणः करुणोऽगुरुः ॥
शिग्रुवर्कालर्ककण्टालीभूस्तृणं मरिचः क्षवः ॥९०॥
काण्डिरस्तुलसी स्वास्यं ताम्बूलीशृङ्गवेरिका ॥
फणिज्जकश्च चाङ्गेरी पिप्पलीमूलचित्रकम् ॥ ९१ ॥
चव्यं त्वचा च वाराहीकन्दो लशुनगृञ्जनौ ॥
पुन्नाडवाकुचीबीजं टङ्कीजम्बीरजं फलम् ॥ ९२ ॥
चिञ्चावार्ताककालिङ्गकर्कार्वेर्वारुपाकिमम् ॥
पीलुपर्णं बालबिल्वं तोदनं शीर्णवृन्तकम् ॥ ९३ ॥
मरिचैला दीप्यगन्धाऽऽसुरीसर्षपरामठाः ॥
गुलिकालवणं स्वर्जियवोपक्षारगन्धकाः ॥ ९४ ॥
कुसुम्भश्च कुलत्थाश्च क्षारकूपाम्बुशुक्तकम् ॥

मद्यं मूत्रं काञ्जिकं च सौवीरकतुषोदके ॥ ९५ ॥
खलः काम्बलिकश्चैव गोरसेन विपाचितौ ॥
तैलं मूलकजीमूतकुटजार्ककरञ्जजम् ॥ ९६ ॥
विडङ्गक्ष्वेडकोशाम्रतुम्बीसर्षपशिग्रुजम् ॥
ज्योतिष्मतीङ्गुदीपार्थपृथ्वीकाहस्तकर्णजम् ॥ ९७॥
आरुष्करं तौवरकं द्रवन्तीसप्तलोद्भवम् ॥
नीलिकाशङ्खिनीश्यामादन्तीकाम्पिल्लपीलुजम्॥९८॥
देवाह्वचीडागम्भीरशिंशिपागरुसारजम् ॥

वरुणः सेतुवृक्षः । करुणः छगलाण्ड्यः । अगरुः जोङ्गकः । शिग्रुः शोभाञ्जनकः । अर्को रूपिका । अलर्को मन्दारः । कण्टाली कण्टकारिका । भूस्तृणं मालातृणम् । मरिचो जम्बीरशाकं तल्लक्षणं, "जम्बीरगंधि हरितं यदम्लकटुकं रसे । शाकं जम्बीरमित्युक्तं जम्भजं चोत्तरापथे—" इति । क्षवः छिक्किका । काण्डीरो व्याघ्रणातः । तुलसी देवदुन्दुभिः । स्वास्यं सुमुखः । ताम्बूली नागवल्ली । शृङ्गवेरिका गोजिह्वाभेदः । 'शृङ्गवेरवदाह्न्य शृङ्गवेरी विभाविता । कुस्तुम्बुरुवदाहृत्य तुम्बुरुणि वृहंति च"इत्येके । फणिज्जको मरुवकः । चाङ्गेर्यम्लपत्री । पिप्पलीमूलं ग्रन्थिकम् । चित्रको वह्निः । चव्यं चविका । त्वचा गन्धत्वक् । वाराहीकन्दः " क्षीरान्विता मूलकतुल्यकन्दा सप्तापृपत्रा सितरक्तकाण्डा । विभर्ति या पल्लवमष्टशब्दात्सकञ्चुकी श्वेतवपुर्वरेण्या—" इत्यष्टाङ्गसंग्रहे । " शाककर्कशवाराहचूपणाकारकन्दका । ताम्बूलवल्लीच्छदवद्वाराही गृष्टिकोच्यते—" इत्यन्यत्रोक्ता वा वाराही,तस्याः कन्दः । लशुनो रसोनः । गृञ्जनः पलाण्डुभेदः । तथाच वाप्पचन्द्रः—"गन्धाकृतिरसैस्तुल्यो

गृञ्जनस्तु पलाण्डुना । सूक्ष्मनालाग्रपत्रत्वाद्भिद्यते-सौ पलाण्डुत-" इति । पुन्नाडबाकुचीबीज पुन्नाड एड गज, वाकुची सोमराजी, तयोर्बीजम् । लुङ्गीजम्बीरजफल लुङ्गी मातुलुङ्गी, जम्बीरो दन्तशठ, ताभ्यां जात फलम् । पाकिम-मिति चिञ्चादिपञ्चकविशेषणम् । तत्र चिञ्चा चुक्रिका । वार्ताक वृन्ताकम् । कलिन्द कालिङ्गम् । कर्कारु च्यारुयातम् । एर्वारु कर्कटी । पीलूपर्ण कटुरस पीलुफलम् । बालबिल्वं कोमलबिल्वफलम् । तोदनं राजप्रिय शीतफलम, रावणाम्लिके-त्येके । शीर्णवृन्तक मुखवासकफल, कर्करकमित्येके, क्षुपत्रक मित्यन्ये । मरीच तीक्ष्णम । एला स्थूलैला । दीप्यो यवानी । गन्धा पशुगन्धा । आसुरी राजिका । सर्षप· सिद्धार्थ· । रामठो हिङ्गु । गुलिकालवण पाकातिशृतत्वाद्गुटिकाभूतलवणम् । स्वर्जि स्वर्जिक्षारः । यवक्षारो यावशूक । ऊपरा ऊपक', 'ऊषरमृत्तिकापाक' इत्येके । गन्धको लेलीतक । कुसुम्भकुलत्थौ धान्यविशेषौ । क्षारकूपाम्बु क्षाररस कूपोदकम् । शुक्त चुक्रं तल्लक्षणम्,—" यन्मद्यादि शुचौ भाण्डे सक्षौद्रगुडकाञ्जिकम्, धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्र तदुच्यते-" इति । आदिशब्देन मधूकपुष्पजादिग्रहणम् । उक्त च-'मधूकपुष्पे-क्षुरसगुडपीलुफलादिभिः । साधित जातमत्यम्लं शुक्तं चुक्रं च तन्मतं-" इति । " फलादीन्यभिपूयन्ते सस्नेहलवणानि यत् । तदाहु शुक्तमपरे सन्धानाभिधुता-भिद ॥ मद्ये दत्ते जलरपाने मद्यशुक्त तदेव तु । मधुशुक्त तु माध्वीके गुडशुक्तं गुडोदके ॥ इक्षुशुक्त चेक्षुरसे इत्यमन्यानि कल्पयेत्" इत्येके । " सर्वं पञ्चरस मद्यं कालान्तरवशा-घदा । त्यक्तान्यरसमम्लत्वं याति शुक्त तदोच्यते-" इत्यन्ये । मद्यं द्राक्षादिसन्धान, उक्त चाष्टाङ्गसंग्रहे " द्राक्षेक्षुमाक्षिकं

शालिरुत्तमव्रीहिरश्मगः । मद्राकरं यदेभ्योन्यत्तन्मत्रमतिरूप-कं "–इति । मूत्रं गोमूत्रम् । काञ्जिकं धान्याम्लम् । सौवीरं गोधूमकाञ्जिकम्, निस्तुषयवकाञ्जिकमित्येके । तुषोदकं यव-काञ्जिकम् ।-खलः काम्बलिकश्च गोरसेन विपाचितः गोरसः तक्रम् । मूलकादीनामगरुसारान्तानां तैलम् । तत्र मूलकं हरिस्पर्श, जीमूतो देवदाली, कुटजो वत्सकः, अर्को रुचिका, करञ्जो नक्तमालः, विडङ्गं वेल्लं, एरंडः कोशातकी, कोशाम्रं लाक्षावृक्षफलं, तुम्बी अलाबुः, सर्षपः सिद्धार्थः, शिग्रुः सौभा-ञ्जनकः, ज्योतिष्मती कङ्गुणिका, इङ्गुदी तापसतरुः, पार्था आदित्यभक्ता, पृथ्वीका बाष्पिका, कृष्णजीरकमित्येके, हस्ति-कर्णो रक्तैरण्डकः महारर्णो भृङ्गराज इत्यन्ये, अरुष्करो भल्लातः, तुवरको व्याघ्रातः, द्रवन्ती शम्बरी, सप्तला चर्मसाह्वा, नीलिका कालाञ्जनी, शङ्खिनी यवतिक्ता, श्यामा श्याममूला त्रिवृत, वृद्धदारुक इत्येके, दन्ती निकुम्भः, कम्पिल्लो रक्त वर्णः, पीलुस्तीक्ष्णतरुः, देवाह्वं देवदारु, चीडा सरलः, गम्भीरः सारतरुविशेषः, केचिन्मण्डीरं पठित्वा शिरीषं व्याचक्षते, शिंशिपा कृष्णसारः, अगरुः जोङ्गकः; एषु मूलकादीनां बीजानि, देवाह्वानादीनां सारः । एतत्सर्वं श्लेष्मानिलघ्नं पित्तकरं च ॥ ९०–९८॥–

अपित्तं कफवातघ्नं बिल्वः पत्तूरकोर्जकः ॥ ९९ ॥
आर्द्रकं रेणुका मध्यवार्ताकं चाम्लदाडिमम् ॥
शुष्के कोलकणे वङ्गकासीसे सीधुराक्षिकः ॥ १००॥

बिल्वो मालूरः । पत्तूरो लोहमारः । अर्जकः प्रसिद्धः । आ-र्द्रकं शृंगवेरम् । रेणुका कौन्ती । मध्यवार्ताकं मध्यं नातिकोमलं नातिजरठम् । अम्लदाडिमं अम्लरसं दाडिमीफलम् । शुष्के कोल कणे कोलं बदरं, कणा पिप्पली । वङ्गकासीसे कासीसत्रपुणी ।

सीधुर्गासिकः आक्षिको विभीतकत्वक्कृतः, आक्षिक्या सुरया कृत इति जेज्जटः । एतत्सर्वं श्लेष्मानिलघ्नं पित्तोदासीनं च ॥ ९९–१०० ॥

तद्वच्छिग्रुफलं चौतो रसः स्नेहोऽल्पपित्तलः ॥

शिग्रुफलं श्वेतमरीचम् । चौतो रसः सहकारफलवृन्तनिर्यासः । चौतस्नेहः सहकारफलमज्जतैलम् । एतत्त्रयं तद्वत्कफवातघ्नं, अल्पपित्तलं किंचित् पित्तलम् ॥–

कफपित्तहरं जम्बूः खादिरस्तिनिशोऽशनः १०१
पिप्पलोदुम्बरवटपिप्पलीगर्दभाण्डकाः ॥
कोविदाराम्रकोशाम्रप्रियालाङ्कोलसल्लकी ॥१०२
करञ्जशेलुकम्पिल्लकिङ्किरातविकङ्कताः ॥
रोध्रार्जुनबलामोटाभूर्जपिण्डीतकार्गटाः ॥ १०३
श्वेतचन्दनपत्तङ्गे टेकाऽविवृक्षवत्सकाः ॥
काकोदुम्बरिका पूगः कतकश्टिण्टुको धवः १०४
पटोलीकारवल्लीन्द्रवारुणीक्षीरमोरटाः ॥
गुञ्जामेदोगलालज्जाकूर्चपर्णीदुरालभाः ॥ १०५
काकजङ्घा निशा मुस्ता त्रायन्ती पुण्डरीयकः
वालकं कतृणं दूर्वा दर्भो मरुवको नलः ॥१०६ ॥
वंशो बर्हिशिखा देवगन्धा ब्रह्मसुवर्चला ॥
हिलमोची चर्मरङ्गा विषमुष्टचेलत्रालुकम् ॥ १०७
शणपुष्पी हेमदुग्धा तिरिगिच्छि च माचिका ॥
लाक्षा जतुकरी पुष्पं धूकपुन्नागचम्पकात् ॥१०८

पाटलाकोग्जिनीनिम्बलवङ्गवकुलाशनात् ॥
निर्गुण्ड्या मूलकान्मोक्षात्केशरं पद्मनागयोः १०९
अरण्यत्रपुसं बालवार्ताकं तालजोऽङ्कुरः ॥
ताम्रं रीतिर्वर्तलोहं कांस्यगैरिकाहिङ्गुलाः ॥११०
शङ्खाञ्जनाब्धिफेनालं सौराष्ट्री यासशर्कराः ॥
शाल्यादि छिन्नजं लाजा मथितं धान्यवैकरे १११
जले पलाशकाश्मर्यं तैलं यूपस्तु मुद्गजः ॥
पटोलजो मूलकजो निम्बामलकजावपि ॥ ११२

इति बोपदेवीये सिद्धमन्त्रप्रकाशे कफवातघ्नवर्गः ।

जम्बूः महास्कन्धा । खादिरो गायत्री । तिनिशः स्पन्दनः । अशनो बीजकः । पिप्पलोऽश्वत्थः । उदुम्बरः कृमिफलः । वटो न्यग्रोधः । पिप्पली प्लक्षः । गर्दभाण्डकः छायावृक्षः । कोविदारः काञ्चनारः । आम्रं चूतः । कोशाम्रो लाक्षावृक्षः । पियालः चारः । अङ्कोलोऽकोठः । सल्लकी गजभक्ष्या । करञ्जो नक्तमालः । शेलुः श्लेष्मातकः । काम्पिल्लो रक्तवर्णः । किङ्किरातः किङ्किराङ्गः । विकङ्कतः ग्रावतरुः । रोध्रः तिलकः । अर्जुनः ककुभः । बला नागबला । मोटा जयन्ती । भूर्जो लेख्यपत्रः । पिण्डीतकः पिण्डारकः । अर्गटः आर्तगलः । श्वेतचन्दनं शुक्लश्रीखण्डम् । पत्तङ्गं पट्टरङ्गम् । द्रेक्का महानिम्बः । अविवृक्षो मेषश्रृङ्गी । वत्सकः कुटजः । काकोदुम्बरिका फल्गुः । पूगः क्रमुकः । कतकोऽम्बुप्रसादनफलः । टिण्टुकोऽरलुः । धवः शकटाक्षः । पटोली राजीफला । कारवल्ली सुषवी । इन्द्रवारुणी विशाला । क्षीरमोरटो कोटम्बुखः ।

गुञ्जा काकणन्ती । मेदोगला मृगदन्ती । लज्जा नमस्कारी । कूर्चपर्णी मिटवल्ली । दुरालभा यवासिका । काकजङ्घा ध्वांक्ष-जङ्घा । निशा हरिद्रा । मुस्ता गङ्केरी । त्रायन्ती त्रायमाणा । पुण्डरीकः प्रपौण्डरीकः । वालक न्हींवेरम् । कतृण ध्यामम् । दूर्वा शाड्वलम् । दर्भः कुशः । मस्वक खरवकः । नलो देवनलः । वंशो वेणु. । बर्हिशिखा मयूरशिखा । देवगन्धा आरामशीतला । ब्रह्मसुवर्चला मण्डूकपर्णी । हिलमोची जल-ब्राह्मी । चर्मरङ्गा आवर्तकी । विषमुष्टिः केशमुष्टी । एलवालुक-मैलेयम् । शणपुष्पी घण्टारवः । हेमदुग्धा स्वर्णक्षीरी । तिरि-गिच्छि कण्टकरञ्जः । माचिका माचिकम् । लाक्षा जतु । जतुकरी चक्रवर्तिनी । धूकादीनां मोक्षान्तानां पुष्प, तत्र धूक ईश्वरमल्लिका, पुन्नाग पाटलपुष्पं, चम्पकश्चाम्पेय. । पाटला वसन्तदूती । अर्का रूपिका । आञ्जिनी पद्मिनी । निम्बः पिचुमन्द. । लवङ्ग चन्दनपुष्पः । वञ्जुलो मद्यदोहदः । अशनो बीजकः । निर्गुण्डी सिन्दुवारः । मलक हरित्पर्णम् । मोक्षो मुष्ककः । केशर पद्मनागयो पद्म कमलं, नागं नागपुष्पं, तयो केसरं किञ्जल्कम् । अरण्यत्रपुसं वनवालुकम् । वाल्त्रा-तार्कं वोमरहन्ताकम् । तालजोऽस्तालस्याभिनरोऽिद । ताम्रं शुल्वम् । रीति ब्रह्मरीति । वर्तलोहमारकूटम् । कास्य घोष, गैरिक रक्तपाषाण । हिङ्गुलो दरद । शङ्ख कम्बुः । अञ्जन स्रोतोञ्जनादि । अब्धिफेन समुद्रफेन । आल हरितालम् । सौराष्ट्री तुवरी । यासशर्करा दुरालभोद्भवा शर्करा । शाल्यादि छिन्नज छिन्नमरूढ शाल्यादिधान्यम् । लाजा भ्रष्टधान्यानि । मथित दधिविकारः । धान्वैकरे जले धान्व जाङ्गलदेशस्थं, वैकरं विकरस्थ, विकरो वालुकां वीकीर्य कृतो जलाशयस्त-स्थे जले । पलाशः किंशुक, काश्मर्य श्रीपर्णी, तयोस्तैलं

किंशुककाश्मर्ययोर्बीजतैलम् । मुद्गादयो यूषाः । तत्र मुद्गः शिम्बिधान्यमुख्यः, पटोलं राजीफलं, मूलकं हरित्पर्णं, निम्बः पिचुमन्दः, आमलकं धात्रीफलं, पटोलादीनां मुद्गादिसहितानां यूषाः कार्याः, तैर्विना यूषत्वाभावात् । एतत्सर्वं श्लेष्मपित्तघ्नम् ॥ १०१ – ११२ ॥

वातकृत्कफपित्तघ्नं करञ्जोनिम्बपञ्चकाः ॥
राजद्रुमागस्त्यरुष्काः कुतिन्दुः कटुका त्रिवृत् ११३
द्रवन्ती सप्तला दन्ती वासाभूनिम्बपर्पटाः ॥
नदीभल्लातगोजिह्वाकुचैलावृषगन्धिकाः ॥ ११४ ।
कठिल्लको गण्डदूर्वा क्षीरावी कल्पकस्तथा ॥
शाकं कलम्बुनाडीयमूर्वाकम्पिल्लकेबुकात् ॥ ११५ ॥
लाङ्गलीसूरणैरण्डाब्जिनीबिम्बीकलायतः ॥
पुष्पं करीरकाश्मर्यं पलाशार्ग्वधवत्सकात् ॥ ११६॥
शाल्मलीकाञ्चनागस्तिक्षणरोध्राटरूपकात् ॥
फलपत्रे वटाश्वत्थवढ्युदुम्बरवेतसात ॥ ११७ ॥
शिरीषाद्र्दभाण्डाच्च फलं पर्पटकीधवात् ॥
वनतिक्ताक्षकीजम्बुबिम्बीतिन्दुककंटकतः ॥ ११८॥
बलाप्रियंग्वश्वकर्णदीनकीबकुलादपि ॥
राजालाबोःकोशवत्या लवल्याः शुष्कपूगकम्॥११९
श्लेष्मातचीर्भिटे वाले नेपालो दीर्घपत्रकः ॥
मूचीपत्रो नीलपेरो लोहं लोहमलस्तथा ॥ १२० ॥
शाल्यादि स्थलसंभूतं सक्तुर्भक्ष्याश्च सूपजाः

माङ्गल्यको राजमाषो मकुष्ठककलायकौ ॥ १२१ ॥
सतीनस्त्रिपुटाढक्यौ मसुरश्चणकस्तथा ॥
हरेणुश्चेत्यादिशमीधान्यं नन्दीमुखी तथा ॥ १२२॥
श्यामाकः शान्तनुः कङ्गुर्मधूली कोद्रवो यवः ॥
सरित्पारकूपाम्बु मधुर्ना क्षौद्रदालिके ॥ १२३ ॥
शतपत्रो भृङ्गराजः कोयष्टिर्जीवजीवकः ॥
बभ्रु खञ्जनहारीतौ दुर्नासा गिरिशा जटी ॥ १२४॥
लट्वा लट्टपो गोक्ष्वेडः सारङ्गो वटहा पिकः ॥
कुलिङ्गः सुगृहा लोहपृष्ठः फाकारदुन्दुभि ॥ १२५॥
क्रतुयष्टिर्डिण्डिमाणचिरणीशुकसारिकाः ॥
मञ्जुलीयकदात्यूहगोपापुत्रप्रियात्मकाः ॥ १२६ ॥
कुम्भस्कृतः पाणविकः कोशकैरातकर्पराः ॥
वल्यूलीकलविङ्काग्निचूडाद्याः प्रतुदाः खगाः॥१२७॥

फरञ्जी उत्तन्दकी । निम्ब पिचुमन्दः । पद्मक पद्मकाष्ठम् । गजद्रुमो लताश्वत्थ । अगस्ति अगस्तिद्रुमः। अरुष्को भल्लात । कुतिंदु काकतिन्दु । कटुका कटुरोहिणी । त्रिवृत् कुम्भ । द्रवन्ती शम्बरी । सप्तला चर्मसाहा । दन्ती निकुम्भ । वासा अटरुष । भूनिम्ब किराततिक्तक । पर्पट पर्पटक' । नदी भल्लातो जलभल्लात । गोजिह्वा दार्विपत्रिका । कुचैला पाठाभेद । हपगन्धिका वस्तगन्धा । कठिल्लक पुनर्नवाभेद । गण्डदूर्वा गण्डाली । क्षीरावी दुग्धिका । कल्पकों गन्धकर्चूरः । कलम्बादीनां फलापातानां शाकम् । तत्र कलम्बुर्नालिक.नाडी

नाडिका । तयोर्लक्षणं " कलम्बुर्नालिकः स्वादुः सुषिरो बहुतोयजः । तद्भेदो नालिका श्लक्ष्णा ज्ञेया सान्या कलम्बुका"-इति । मूर्वा मधुरसा । कम्पिल्लो रक्तवर्णः । केत्रुकं पेचुका । लाङ्गली कलिहारी । सूरणश्चित्रदण्डः । एरण्डः पञ्चाङ्गुलः । अम्जिनी पद्मिनी । बिम्बी तुण्डिकेरी । कलायो वर्तुलं शिम्बिधान्यम् । करीरादीनामाटरूषकान्तानां पुष्पम् । तत्र करीरो गूढपत्रकः । काश्मर्यः श्रीपर्णी । पलाशः किंशुकः । आरग्वधः शम्पाकः । वत्सकः कुटजः । शाल्मली तूलिनी । काञ्चनः कोविदारः । अगस्ति अगस्तिवृक्षः । क्षणो मातुलानी । रोध्रकः तिल्वकः । आटरूषको वासकः । वटादीनां गर्दभाण्डान्तानां फलपत्रे । वटो न्यग्रोधः । अश्वत्थः पिप्पलः । वटी पिप्पली । उदुम्बरः कृमिफलः । वेतसो वंजुलः । शिरीषः शुकतरुः । गर्दभाण्डः छायावृक्षः । पर्पटकयादीनां फलम् । तत्र पर्पटि प्रसिद्धा । धवः शकटाख्यः । वनतिक्ता तिक्तपटोली । अक्षिकी प्रसिद्धा । जम्बूर्महास्कन्धा । बिम्बी तुण्डिकेरी । तिन्दुको विरली । टङ्को मन्मथद्रावणः । बला वाट्यालकः । प्रियङ्गुः गन्धप्रियङ्गुः । अश्वकर्णः सस्यसंवरः । दीनकी आशतिकः । बकुलो मद्यदोहदः । राजालाबुः मधुरालाबुः । कोशवती कोशातकी । लवली "घनस्निग्धहरित्प्रान्तमपुन्नाटसदृक्च्छदा । सुगन्धिमूला लवली पाण्डुकोमलवल्कला-" इत्युक्ता । शुष्कपूगं शुष्कक्रमुकफलम् । श्लेष्मातं शेलुफलम् । चिर्भिटं ढङ्गरम् । नेपाल्यादयश्चत्वार इक्षवः । नेपालो नेपालदेशजः । दीर्घपत्र आयतपर्णः । सूचीपत्रस्तीक्ष्णाग्रपर्णः । नीलपेरोऽसितपर्वा । लोहमलो मण्डूरम् । शाल्यादि स्थलजं शाल्यादि धान्यम् । सक्तवः भ्रष्टयवादिचूर्णः । भक्ष्याश्च सूपजाः मुद्गादिकृता भक्ष्याः । मङ्गल्यादिहरेण्वन्तं शिम्बीधान्यम् । तत्र मङ्गल्यः पाण्डुरो मसूरभेदः ।

सारिका प्रियवादिनी । मंजुलीयको मंजुलनादः । दात्यूहः श्वित्रिभवर्णः। कालकण्ठः अन्यकाक इत्येके । गोपीपुत्रो गोपालकः। प्रियात्मकः त्रपुरञ्जकः । कुम्भस्कृतो द्रुतिविरावः । पाणविकः पणवध्वनिः । कोशः पत्रचरकः । कैरातः किरातप्रियः । कर्परः .कपालाभः । वल्गुली वक्रविष्ठाविनिर्गमा । कलविंकः चटकभेदः । अग्निचूडोऽग्निवर्णशिखः। आदिशब्दादन्येप्येवंविधाः। एतत्सर्वं मारुतकरं श्लेष्मपित्तहरं च॥ ११३—१२७ ॥

अवातं कफपित्तघ्नं तिलपर्ण्युष्णसुन्दरः ॥
भव्यं करीरं कर्कोटं कारवेल्लं बिभीतकम् ॥१२८
कदलीकन्दवेत्राग्रमधुमण्डसिते मधु ॥
झराम्बुशशभस्माङ्गपारावतकपिञ्जलाः ॥१२९॥
तद्वत्तण्डुलीयो भार्गीशाको मुद्गोल्पवातलः ॥

तिलपर्णी बर्बरकः । उष्णसुन्दरो ग्रीष्मसुन्दरः । भव्यादीनि पञ्च फलानि । तत्र भव्यं कमरङ्गं, करीरं गूढपत्रकं, कर्कोटं कर्कोटीफलं, कारवेल्लं कारेलं, बिभीतमक्षम् । कदलीकन्दो रम्भाकन्दः । वेत्राग्रं वेत्रस्याग्रजोऽङ्कुरः । मधुमण्डो मधुनोच्छो भागः । मधुसिता मधुशर्करा, अयं तु विशेषः मधुपाकात्स्यफद्रवत्वं मधु शर्करावद्बध्नाति ।मधु माक्षिकम्। झराम्बु निर्झरोदकम् ।शशो मृगविशेषः। भस्माङ्गादयः पक्षिणः। तत्र भस्माङ्गः कपोत। पारावतो नरप्रियः । कपिञ्जलो गौरतित्तिरिः । एतत्सर्वं कफपित्तघ्नं वातोदासीनम्। तण्डुलीयः तण्डुलीयशाकः। भार्गीशाको द्विजयष्टिशाकः । मुद्गः प्रसिद्धः । एते त्रयस्तद्वत् कफपित्तघ्नाः अल्पवातलाः किंचिद्वातलाः ॥ १२८ १२९ ॥—

इति श्रीवोपदेवीये सिद्धमन्त्रप्रकाशे कफपित्तघ्नवर्गः ॥

दोषघ्नं काश्मरीवन्दाशिरीषारग्वधवंजुलाः ॥
तून्यशोको सप्तपर्णपलाशाश्मघ्नपाटलाः ॥ १३० ॥

किणीही सारिवा पाठा मूर्वा सोमा प्रसारिणी ।
तुंब्यद्रिकर्णी वासन्ती जीवन्ती शङ्खिनी विषा १३१
गुडूच्यम्लानोऽतिमुक्ता मुञ्जस्तामलकी बला ।
सहदेवाम्बुकृष्णेभनलाकासघ्नकङ्कताः ।
कामाता वाकुची ब्राह्मी चिल्ली जीवन्तवास्तुके १३३
सतीनमर्मरीसूपाशाकं राजक्षवः शठी ॥
सुनिषण्णोकुरो वर्षाः शुष्कं बालं च मूलकम् ॥१३४॥
स्पृकास्थौणेयतगरदमनोशिरकुङ्कुमम् ॥
जातीमांसीशङ्खपुष्पीतरुणीकुन्दधान्यकम् ॥ १३५॥
शालिपर्णी पृष्ठिपर्णी गोक्षुरो वृषसारकः ॥
फलं धात्र्यभयाक्षीरीशताक्षकविकङ्कतात् ॥ १३६ ॥
पटोलीनिम्बकुटजकेतकीसरहेंगुदात् ॥
पक्वं कपित्थकूष्माण्डप्राचीनामलनीपतः ॥ १३७ ॥
स्विन्नपूगं स्वादुतिक्तं पीलु स्वादु च दाडिमम् ॥
बोलो राला सिलसिंधुसूतस्वर्णाभ्रमाक्षिकाः ॥१३८॥
रक्तशालिर्महाशालिः कलमः शकुनाहृतः ॥
दीर्घशूको रोध्रशूकस्तूर्णकः शङ्खमौक्तिकौ ॥१३९॥
लाङ्गलः कर्दमो लोहवालो महिषमस्तकः ॥
पुंड्रःपाण्डुःपुण्डरीकः प्रमोदो गौरसारिवौ ॥ १४० ॥
सारामुखः शीतभीरुस्तपनीयः सुगन्धिकः ॥
पुष्पाण्डको दीर्घनालो महादूपकदूपकौ ॥१४१॥

पतङ्गकः काञ्चनको हायनाद्यास्तु शालयः ॥
गौरो महान्कुरुवकः प्रमोदोऽशनपुष्पकः ॥१४२॥
मुकुन्दः कालकः पीतः केदारश्चणकाङ्गको ॥
इत्याद्याः षष्ठिका व्रीहिर्महाकृष्णो जतुर्मुखः ॥१४३॥
सारामुखस्त्वरितको लावाक्षश्चीनशूकको
पारावतः कुक्कुटाण्डो जतुशारददर्दुराः ॥१४४॥
कुरुविन्दो नन्दिमुखो ह्यालो वरकगन्धनौ ॥
वार्यान्तरिक्षं यद्गाङ्ग-सामुद्रमपि चाश्विने ॥१४५॥
भौमं देशे सिते कृष्णे नीले साधारणे शुचौ ॥
पृथौ चेन्द्वर्कपवनैः स्पृष्टं यदरसं तु यत् ॥१४६॥
यदूर्ध्वं शारदं यच्च पारियात्रनदीभवम् ॥
यत्स्वादु कौपं यत्प्रादशोपं यच्छृतशीतलम् ॥१४७॥
सप्तभस्मजतुस्वर्णरूप्याश्मा कृतमतापितम् ॥
धारोष्णदुग्धं दधि तु धात्रीयुक्पाकिमं मधु ॥१४८॥
अजाक्षीरादि जीर्णाज्यं घृतमण्डः कृतो रसः ॥
[illegible] ॥१४९॥
[illegible] ॥
[illegible] ॥
[illegible]

कस्तूरी [illegible] चन्दन [illegible] ॥ [illegible]
गन्धः, [illegible] । [illegible] । [illegible] ।

दम्भः। स्विन्नपूगं स्विन्नक्रमुकफलम्। स्वादुतिक्तं पीलु मधुरतिक्तरसं पीलुफलम्। स्वादु दाडिमं मधुरदाडिमफलम्। बोलो गन्धरसः। राला सर्जरसः। सिह्लकः तुरुष्कः। सिन्धु सैन्धवम्। सूतः पारदः। स्वर्णं सुवर्णम्। अभ्रं अभ्रकम्। माक्षिकस्ताप्यधातुः। रक्तशाल्यादयो हायनान्ताः शालयः "शीतोष्णवर्षजाः शालिषष्टिकव्रीहयोऽथवा। अकण्डितश्वेतगर्भाः सकण्डितपाण्डुराः" इति शाल्यादीनां भेदः। तत्र रक्तशालिः लोहितशूकः। महाशालिः महातण्डुलः। कलमोऽन्तर्वेद्यां कलम्बिरिति व्याख्यातः। शकुनाहृतः "द्वीपान्तरात्समानीतो गरुडेन महात्मना। शकुनाहृतशालिः स्याद्गरुडापरनामकः" इत्युक्तः; उत्तरकुरोः हंसैरानीतः सावत्त्यां चक्र इति, मगधे माशकल्यात इत्येके। दीर्घशूकः आयतशूकः। लोध्रशूको लोध्रपुष्पाकारशूकः। तूर्णः शीघ्रपाकी आश्वयुज इति काश्मीरे। शङ्खमौक्तिकः शङ्खाकारशूको मुक्ताकारतण्डुलः; द्वावेतौ इत्येके। लाङ्गलः सीरकृष्णभूमिजः। कर्दमः पङ्किलभूमिजः। लोहवालः कठिनतण्डुलः। महिषमस्तकः कौलिकलेलासीति मध्यदेशे। पुण्ड्रः पौण्डरीकाभः। पाण्डुः पाण्डुरूपः पाण्डुशूकश्च। पुण्डरीकः श्वेतोत्पलाभः। प्रमोदः प्रहादकः। गौरो हरिद्राभः। सारिवः सारिवासदृशः। सारामुखः कृष्णमुक्ताकारतण्डुलः। शीतभीरुः यो बहुशीतेन निष्पाद्यते। तपनीयो अल्पशीतेन निष्पाद्यते। सुगन्धिको गन्धशालिः। पुष्पाण्डः पुष्पवत्सुरभिः सुकुमारतण्डुलः। दीर्घनालः आयतनालः। महादूषको मदागदकारी। दूषको मदकारी। पतङ्गकः कुङ्कुमकः। काञ्चनः सुवर्णशालिः। हायनः शकुनाकः, पोटकपुच्छ इति जेज्जटः। आदिशब्दादन्येऽप्येवंविधाः। गौराद्याः काङ्गुकान्ताः षाष्टिकाः। तत्राद्यो गौरः मदम्प्रमोदः, पीतावर्णकाङ्गुकगौरकाङ्गुकाः, शेषाः कृष्णाः। तत्र गौरो गौरषष्टिकः। महान्महाषाष्टिकः। कुरुवकः कुरुवककुसुमा-

कारसूकः । मंमोदः मंहादकः । अशानपुष्पकोऽशानपुष्पाकारसूकः । मुकुन्दो मुकुन्दप्रियः । कालकः कालवर्णः । पीतः किंचित्कृष्णोऽतिगौरः । केदारः मधुरोदकेन जातः । चूर्णः सूक्ष्मतण्डुलः । कांगुकः कंगुसदृशः । इत्याद्या अन्येऽप्येवंविधाः । महादयो गन्धनान्ता व्रीहयः । तत्र महान्महातण्डुलः । कृष्णः कृष्णतूषतण्डुलः । जतूमुखो लाक्षाभमुखः । सारामुखः सारिकाचंच्वाभतण्डुलः । त्वरितः शीघ्रपाकी । लावक्षो लावनेत्राभतण्डुलः । चीनः चीनफलबीजाभतण्डुल । सूकरः सूकरवर्णपुष्पतण्डुलः । कुक्कुटाण्डः कुक्कुटाण्डाभतण्डुलः । उज्जालो य ऊर्ध्वं जालैरिव शूकैर्धीयते । शारदो यः शरदि पच्यते । दर्दुरो दर्दुरवद्वृष्टिजीवी । कुरुविन्दो यः प्रायः कुरुषु लभ्यते । नन्दीमुख आटिचंच्वाभतण्डुलः । वरको वराटिकाकारतण्डुलः । उद्दालो वनकोद्रवाकारतण्डुलः । गन्धनः सुगन्धिः । वार्यन्तरिक्षं यद्गाङ्गं यदान्तरिक्षं गाङ्गं वारि ननु भौमं ननु सामुद्रम् । सामुद्रमपि चाश्विने आश्वयुजि गृहीतं सामुद्रमपि । तत्रान्तरिक्षलक्षणम् , "पुनर्वस्वादिनरके वारि मुञ्चति यद्रविः । क्ष्मामप्राप्तं गृहीतं तदान्तरिक्षमुदाहृतं" इति । गाङ्गसामुद्रलक्षणं "येनाभिवृष्टममलं शाल्यन्नं राजते स्थितं ॥ अक्लिन्नमविवर्णं च तत्तोयं गाङ्गमन्यथा ॥ सामुद्रं तन्न पातव्यं मासादाश्वयुजादृते"—इति । भौमं देशे सित इत्यादि । सितादिदेशस्थं इन्द्रादिस्पृष्टं पक्वौममपि । सिते श्वेतमृत्तिके भूभागे । कृष्णे कृष्णमृत्तिके । नीले नीलमृत्तिके । साधारणे जाङ्गलानूपसाधारणे । उक्तं च, "देशोऽल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः । अनूपो विपरीतोऽस्मात् समः साधारणः स्मृतः—" इति । शुचौ निर्मले । पृथौ विस्तीर्णे । इन्द्वर्कपवनैः स्पृष्टं चंद्रसूर्यवायुभिर्यथाकालं सम्बद्धम् । मदरसं यदम्यकालम् । यदूर्ध्वं यत् पर्वतोपरि स्थितम् । वल्कादि घाटरूपसंबन्धाद्रूपमाविषयं, परपारिपाननदीमयं । प-

फलं तस्य नाडी, गवेधुका कपिला तिन्दिशादि चतुष्टयफलं; तत्र तिन्दिशं छाटकं, चीनाकं दीर्घमण्डपवल्लीफलं, पुत्रजीवः प्रसिद्धः, कुकुण्डजं एतत्सर्वं वातश्लेष्मकरम् ॥ १५७॥ १५८॥

**तद्वत्पित्तकरी किंचित् यातुकी ससुवर्चला ॥१५९॥**

यातुकी केशपर्णी । सुवर्चलादित्यभक्ता । एषा द्वयी वातश्लेष्मकरी किंचित् पित्तला च ॥ १५९ ॥

**कफपित्तकरं त्वाम्रं बद्धास्थि नलिनीजलम् ॥**
**कालाम्लासुतशाण्डाकी शष्कुली रागखाडवौ॥१६०॥**
**प्रदिग्धमांसं पिष्टोत्था भक्ष्या यवकहायनौ ॥**
**नैपधा पांशुवाप्याद्यः शालि-**

आम्रं बद्धास्थि मध्यावस्थं चूतफलम् । नलिनीजलं पुष्करिणीतोयम् । कालाम्लासुतशाण्डाकी कालाम्ला चिरकालावस्थानेनाम्लीभूता, आसुता शांडाकी । " स्विन्नं क्षुण्णं मूलकादि सुगन्धिकटुकान्वितम्।वटकीकृत्य कुर्वन्ति शाण्डाकीं सुखवासिनः" इत्युक्ता । आदिशब्देन मुद्गादिग्रहणं, उक्तं ह्यन्यत्र "शाण्डाकी कन्दमूलादिमुद्गादिवटकैः कृता" इति । शाकसिक्थमण्डासुतिः शाण्डाकीत्येके । " मूलकन्दकसन्धानं शाण्डाकी स्याद्दृढद्रवा " इति तद्विशेषः।शष्कुली नलेनोक्ता"शालूकबीजसंयुक्तैःशालिकोद्रवतण्डुलैः सुपिष्टैस्तिलसंयुक्तैस्तैलभृष्टैस्तु शष्कुली"-इति । रागखाडवौ व्यंजनविशेषौ, तयोर्लक्षणं " सिताम्भआदिमधुरा रागास्तत्राच्छकान्तयः । ते साम्लाः खाडवा लेह्याः पेयाश्चांशुकगालिता -"इति।आदिशब्दादन्येषां कपित्थादीनां ग्रहणम् । मधुरा मधुरमायाः । उक्तं ह्यन्यत्र "स्वाद्वम्ललवणो राग ईषत्स्वादुरसैः फलैः । कपित्थादियुतो गन्धवर्णैरसंयुतः"-इति । लेह्याः पेया चेति रागाणां द्वैविध्यं; उक्तं हि,- " कपित्थदध्यमृद्वीकागुड-

सण्डावमहितो मधुशीर्षकः-"इति। पेया सासिक्थः शालितण्डुल निकाय । संयावः " समितामम्बुदुग्धेन मर्दयित्वा सुशोभनम् । पचेद् घृतोत्तरे खंडे क्षिपेद्दाण्डे नवे ततः॥ संयावोऽसौ युतश्चैर्लव- पलामरिचार्द्रकैः" इत्युक्तः । पायसः क्षैरेयी । एतत्सर्वं कफकरम् ॥ १५४ ॥

कूर्चिकादिकृता भक्ष्याः श्लेष्मला नातिपित्तलाः १५५

कूर्चिकादिभिः क्षीरविकारैः कृता भक्ष्याः कफकराः किंचित् पित्तकराश्च ॥ १५५ ॥

वातपित्तकरं बालमाम्रं भक्ष्या विरूढजाः ॥

बालमाम्रं कोमलं चूतफलम् । भक्ष्या विरूढजाः विरूढैर- ङ्कुरितधान्यैः कृता भक्ष्याः । एतद् द्वयं वातलं पित्तलं च ॥

तद्वत्श्लेष्मलं चामं कपित्थं वंशजोङ्कुरः ॥१५६॥

आमं कपित्थं कोमलं कपित्थफलम् । वंशजोङ्कुर वेणो क रीरः । एतद्द्वयं वातपित्तकरं श्लेष्मोदासीनं च ॥ १५६ ॥

प्रोक्ता यवसुरा किंचित् कफला वातपित्तला ॥

यवपिष्टकृता सुरा वातपित्तकरी किंचित्श्लेष्मकरी च ॥

वातश्लेष्मकरं शाकं यष्टिगुग्गुलुसूप्यजम् ॥ १५७ ॥
नालिकं शालिकल्याणी चंचुपर्णी कुबेरजम् ॥
यवशाकं च कूष्मांडनाडीजं सगवेधुकम् ॥ १५८ ॥
फलं तिन्दिशचीनाकपुत्रजीवककुण्डजम् ॥

यष्ट्यादिगवेधुकान्तं शाकं; तत्र यष्टी यष्टीमधु, गुग्गुलुर्म- हिषाक्षः, सूप्या मुद्गादयः, नालिक नालिकाकारं, शालि- कल्याणी शालिंचिका, चञ्चपर्णी चञ्चसदृशपत्रा । कुबेरो नन्दि- वृक्षः । यवशाकं यवसदृशचिल्लीसदृशमहामत्रम् । कूष्माण्डं कुम्भ-

फाणितं बिल्वलकुचे पक्के काणकपोतकः ॥ १६४ ॥
भेदासी चिलिचीमश्च वृद्धशुष्ककृशामिषम् ॥
पिण्याकः पाटलाव्रीहिर्मेदोमज्जवसाः पुनः ॥ १६५॥
कुम्भीरहस्तिमहिषवरटाकाकमद्गुजाः ॥
पिण्याकाम्लाशिनीबालवत्सावत्सापयो जलम् १६६
शृतशीतोपितं नष्टं पल्वलोपाध्विवप्रगम् ॥
वकसः कोहली मद्यं शिष्टनष्टनवोत्थितम् ॥ १६७ ॥

सार्षपं शाकं सर्षपपत्रादिशाकं, ज्योतिष्मत्याः कङ्गुणिकायाः शाकं, कुठिअरः कुञ्जरः, छत्राकं कर्बुरक, भुंभुः भुंभूक। लोणीका घोलिका। रूक्षार्द्रामं च मूलकं वृद्धं जरठं, आर्द्रं सरस, आममनग्निपक्वं मतु बालं, तस्य दोषलत्वादिति। तिलपिण्याकविकृति तिलविकृतिर्मोदकादिः, पिण्याकस्तिलपीडितयंत्रकिट्टः, तस्य विकृतिर्वटकादिः, शुष्कशाकं शुष्कवार्ताकादिः। विरूढकमङ्कुरितधान्य, विगसरोहमसम्यग्रूढं जातमात्रमित्येके। शाण्डाकीवटकानि यैर्वटकैः शाण्डाकी निष्पाद्यते। आम मधु अपक्वं मधु। मन्दाविकं दधि मन्दमसम्यग्जात दधि, आविकं मेषीक्षीरजं दधि, द्वन्द्वैक-
* वद्भावादेकवचनम्। फाणितं समल इक्षुविकारः। बिल्वलकुचे पक्के बिल्वं मालूरं, लकुचं लकुचफलम्। काणकपोतो हूस्वारुणः कपोतभेदः। भेदासी पत्रवासी लघु, शुकभेद पत्रशुकाख्यः। चिलिचीमो मत्स्यभेदः। तस्य लक्षणम्,— ‘शकली रक्तनयनो रक्तराजिश्च सर्वतः। मायश्चरति यो भूमौ स तु मत्स्यश्चिलीचिम॰” इति। वृद्धशुष्ककृशामिषं वृद्धं जराव्याप्तमृगादिजं, शुष्कमनार्द्रं, कृशं क्षीणधातुमृगादिजम्। पिण्याको व्याख्यातः। पाटला पाटलापुष्पाभो व्रीहि। कुम्भीरादिजाता

फाणितं विल्वलकुचे पक्के काणकपोतकः ॥ १६४ ॥
भेदासी चिलिचीमश्च वृद्धशुष्ककृशामिषम् ॥
पिण्याकः पाटलाव्रीहिर्मेदोमज्जवसाः पुनः ॥ १६५ ॥
कुम्भीरहस्तिमहिषवरटाकाकमद्गुजाः ॥
पिण्याकाम्लाशिनीबालवत्सावत्सापयो जलम् १६६
शृतशीतोपितं नष्टं पल्वलोपान्धिवप्रगम् ॥
वक्रसः कोहली मद्यं शिष्टनष्टनवोत्थितम् ॥ १६७ ॥

सार्षपं शाकं सर्षपपत्रादिशाकं, ज्योतिष्मत्याः कङ्गुणिकायाः शाकं, कुठिञरःकुञ्जरः, छत्राकं कर्बरकं, भुंभु भुंभूक । लोणीका घोलिका । वृद्धाद्रार्मं च मूलकं वृद्धं जरठ, आर्द्रं सरसं, आममनग्निपक्वमनु धालं, तस्य दोषलत्वादिति । तिलपिण्याकविकृति· तिलविकृतिर्मोदकादिः, पिण्याकस्तिलपीडितयंत्रकिट्ट, तस्य विकृतिर्वटकादिः, शुष्कशाकं शुष्कवार्ताकादिः । विरूढकमङ्कुरितधान्य, विगतरोहमसम्यग्रूढं जातमात्रमित्येके । शाण्डाकीवटकानि गैर्वटकैः शाण्डाकी निष्पाद्यते । आम मधु अपक्वं मधु । मन्दाविकं दधि मन्दमसम्यग्जात दधि, आविकं मेषीक्षीरज दधि, द्वन्द्वैकवद्भावादेकवचनम् । फाणितं समल इक्षुविकार. । विल्वलकुचे पक्के विल्वं मालूर, लकुचं लकुचफलम् । काणकपोतो ह्रस्वारुणः कपोतभेदः । भेदासी पत्रवासी लघु शुकभेद· पुनः शुकाल्पः । चिलिचीमो मत्स्यभेदः । तस्य लक्षणम्,–
‘शकली रक्तनयनो रक्तराजिश्च सर्वतः । मापश्चरवि यो भूमौ स तु मत्स्यश्चिलीचिम.” इति । वृद्धशुष्ककृशामिषं वृद्धं जराग्रस्तमृगादिजं, शुष्कमनार्द्रं, कृशं क्षीणधातुमृगादिजम् । पिण्याको व्याख्यातः । पाटला पाटलापुष्पाभो व्रीहिः । कुम्भीरादिजाता

मेदोमज्जवसा । तत्र कुम्भीर पादि जलेशयभेदः, हस्ती गजः, महिषो अश्वारिः, वरटो विष्किरभेदः काको वायसः, मद्गु र्जलकाकः । पिण्याकाम्लाशिन्यादीनां पय क्षीरं; तत्र पिण्याकाशिनी तैलकिट्टभक्ष्या, अम्लाशिनी भाण्डलेपादिसन्धानभक्ष्या, बालवत्सा पयोमात्रवृत्तिवत्सा, अवत्सा वत्सेन विना दुह्यमाना, अथवा विशुध्या म्रियमाणवत्सा । शृतशीतोषितादि वमगान्तं जल, तत्र शृतशीतोषित क्वथित सद्रात्रिमुषितं, नष्ट विकृतगन्धवर्णरसस्पर्शं, पल्वलगमल्पसर स्थं, उषगं क्षारभूमिस्थं, अब्धिगं समुद्रगं, वमगं केदारस्थम्।वकसःशुष्कार्द्रो मद्यावयव ,उक्तं च," किण्वबकसमेदकजगलाः कादंबरीसनसे च । शुष्कसमार्द्रा सार्द्रा समुद्रवाः क्रमोर्ध्वगा मद्ये " इति । समोत्र पूर्वोत्तरावस्थासाधारणः । कोहली यवसक्तुसुरा, भक्तसुरेत्येके । शिष्टनष्टनवोत्थित मद्यं शिष्टं अवशिष्ट किंचिच्छेष, नष्ट किंचिद्विकृतरसादि, नव अनतीतवत्सर, जातमात्रमित्येके, उषितं सन्धानपात्रादुद्धृत्य पात्रान्तरस्थापित । एतत्सर्वं दोषत्रयजनकम् ॥ १६७ ॥

इतिश्रीबोपदेवीये सिद्धमन्त्रप्रकाशे दोषत्रवर्गः ।

## न सिद्धः सिद्धमन्त्रेण यस्य द्रव्यस्य निर्णयः ॥ तस्य नान्यत्र कुत्रापीत्यत्र चित्रमधीमताम् ॥१६८॥

एव निर्णीतानि शेषभेषजशक्तितत्त्वेऽप्यत्र ग्रंथे संक्षिप्तत्वात् असंपूर्णत्वशंका माभूदिति साविष्कारमाह–नेत्यादि । अस्मिन् ग्रंथे यस्य द्रव्यस्य निर्णयः शक्तिनिर्धारो न सिद्धो न सम्यग् जातस्तस्य द्रव्यस्यान्यास्मिन् ग्रंथे क्वचिदपि न सेत्स्यति । यद्यप्यानन्त्यात् द्रव्याणि कार्त्स्न्येन वक्तुं अशक्यानि तथापि यावान्ति प्राचीनेषु ग्रंथेषु लभ्यानि तावान्ति निर्णीतानीत्यर्थः । अत्र विषये अधीमतां बुद्धिविहीनानां चित्रं कथमीदृशेनातिसंक्षिप्तेन तादृग्विस्तीर्णचरकादिशास्त्रोक्तसमग्रद्रव्यनिर्णय इत्य-

नुपपत्तिगर्भो विस्मय, ननु बुद्धिमतां, जानंति ह्यमी पदास्ति क्वापि विद्युपि कोप्यतिशय इति। उक्तं च रुद्रभट्टेन, "सानंदं ममदाकटाक्षविशिखैर्येषां न भिन्नं मनो यैः संसारसमुद्रपातविधुरेष्वन्येषु पातायितम् ॥ यैर्निर्वारसुरस्रुतिविलसित द्विन्नैः पदैः सद्वृत तेषामप्युपरि स्फुरन्ति मतय कस्यापि पुण्यात्मनः" इति ॥ १६८ ॥

लेभे जन्म महादेवादायुर्वेदं च भास्करात् ॥
सन्मानं सिंहराजाच्च केशवः कारकोऽस्य सः॥१६९॥

अथ ग्रथकृत् श्रोतॄणामादरार्थमात्मानं ख्यापयति–लेभे इत्यादि। अस्य सिद्धमन्त्रस्य केशवनामा भिषक्कारकः कर्ता। यो महादेवाज्जन्म लेभे लब्धवान्, महादेवसदृशवाच्यत्वाच्च महादेवो वेदपदाभिधानमहाराष्ट्रनिवासी विप्र इति शेषः,अथवानेकजन्माराधनसंतुष्टान्महादेवादीदृक् परोपकारकं जन्म लेभे। यश्च भास्करात् आयुर्वेद लेभे, भास्करशब्दवाच्यत्वात् भास्करशब्दत्वाच्च भास्करो वेदपुराख्यश्रीमद्राजधानीनिवासी विप्र इति शेष, अथवानेकजन्माराधनसंतुष्टाद्भास्करदेवादीदृश परोपकारक्षममायुर्वेद लेभे। यः सिंहराजात्सन्मान सम्यक् पूजा लेभे लब्धवान्, सिंहराजशब्दवाच्यत्वाच्च सिंहानां राजा य सिंहस्तत्सदृशत्वाच्च शत्रूणामिह सिंहराजो दडकमहाराजाधिपो राजविशेष, अथवानेकजन्माराधनसतुष्टाव सिंहराजान्नरसिंहमूर्तिदेवात्सर्वत सन्मान लेभे ॥ १६९ ॥

धनेशाध्यापितो वेदपदौका पितृकर्तृकम् ॥
सिद्धमन्त्र विवृतवान् बोपदेव सता मुदे ॥ १ ॥

इतिश्रीवोपदेवविरचित सिद्धमंत्रप्रकाश समाप्तः ॥

श्रीगणेशाय नमः

# अथ नारायणभिषक्कृतो वातमत्वादिनिर्णयः सटीकः ॥

आयुर्वेदाभिज्ञैर्धर्मा द्रव्यस्य ये प्रोक्ताः।
चलपित्तकफापहतावहतोदासीनतात्मानः ॥१॥
कैवल्यसंकराभ्यां तद्भेदा ये तु सप्तपञ्चाशत्॥
सोदाहरणं लिंगं तेषां वक्ष्याम्यसंकीर्णम् ॥ २ ॥

श्रीश सुश्रुतचरकौ गुरू च नागेशमानम्य ।
नारायणो वितनुते वातमत्वादिनिर्णयं स्वकृतम् ॥ १ ॥

तत्र तावत्प्रेक्षावत्प्रवृत्त्यर्थं सप्रयोजनमभिधेयं प्रतिजानीते-आयुर्वेदाभिज्ञैरिति। प्रथममायुःशब्दो मंगलार्थः।(तेषां सोदाहरणं लिंग असंकीर्णं वक्ष्यामीत्यन्वयः; सोदाहरणं सदृष्टान्तं, लिंगं लक्षणं,असंकीर्णं परस्परं संकररहितं,कथयिष्यामि।)तेषां केषां ये तु तद्भेदाः सप्तपञ्चाशत् तेषां भेदास्तद्भेदाः सर्वत्र अस्ति भवति विद्यतेऽइत्येकेनानुक्तमपि भवतीति क्रियापदं संबध्यते। तेषां केषां? ये द्रव्यस्य धर्मा आयुर्वेदाभिज्ञैः प्रोक्ताः; द्रव्यस्य रसादिगुणाश्रयस्य. आयुर्वेद आयुषः पालको वेदः चिकित्साशास्त्रमिति यावत्, अभिज्ञाः प्रवीणास्तैः। ते के धर्मा इत्याह-चलेति। चलो वायु, अपहन्ता इत्यपहस्तस्य भावोऽपहता नाशकता, आवहतीत्यावहस्तस्य भाव आवहता कारकता. उदासीनो न नाशको न कारको वा तस्य भाव उदासीनता नाशकत्वकारकत्वाभावः, एषां द्वंद्व। चलपित्तकफानां अपहता आवहतोदासीनता च आत्मा स्वरूपं येषां ते तादृशा। चलादिभिरपहतादीनां प्रत्येकमन्वयो

न यथासंख्येन,वातघ्नपित्तघ्नत्वादिशक्तिरूपा इत्यर्थः। केन प्रकारेण सप्तपंचाशद्भेदा भवन्तीत्याह-कैवल्यसंकराभ्यामिति । केवलस्य भावः कैवल्यं, वातघ्नमात्रत्वादि; संकरः वातघ्नत्वादीनां पित्तघ्नत्वादिभिर्योगस्ताभ्यां; एवं चात्र वातघ्नमात्रत्वादीनां सप्तपंचाशतो द्रव्यधर्माणां लक्षणमभिधेयमसंकरेण तज्ज्ञानं च प्रयोजनमित्युक्तम् ॥ १ ॥ २ ॥

प्रत्येकं हनने भवन्ति पवनादीनां नवाऽथ त्रयः
संसर्गस्य पृथक् त्रिकस्य कथितश्चैकस्त्रयोदासने॥
स्यादेकोऽथ चतुर्मिताश्च करणे प्रत्येकमेकैकशो
द्वौ द्वन्द्वस्य विधुस्त्रिकस्य करणे चेत्थं तु
तत्संग्रहः ॥ ३ ॥

गुणग्रहभेदान्संगृह्णाति-प्रत्येकमिति । तेषां सप्तपंचाशतो भेदानां संग्रहस्तत्संग्रह, तु पुनः, इत्थं अनेन प्रकारेण; पवनादीनां वातादीनां, एकमेकं प्रति इति वीप्सार्थेऽव्ययीभावः,एकैकस्य हनने शमने प्रत्येकं पृथग् नव भेदा भवन्ति । प्रत्येकमित्युभयत्र संबंधनीयं, एवं च सप्तविंशतिर्भेदा; तथाहि-वातघ्नमात्रत्वं ( १ ) वातघ्नपित्तलत्वं ( २ ) वातघ्नश्लेष्मलत्वं ( ३ ) वातघ्नपित्तश्लेष्मलत्वं ( ४ ) वातघ्नपित्तोदासीनत्वं ( ५ ) वातघ्नश्लेष्मोदासीनत्वं ( ६ ) वातघ्नपित्तश्लेष्मोदासीनत्वं ( ७ ) वातघ्नश्लेष्मोदासीनपित्तलत्वं ( ८ ) वातघ्नपित्तोदासीनश्लेष्मलत्वमिति वातस्य हनने नव ( ९ ),पित्तघ्नमात्रत्वं ( १० ) पित्तघ्नवातलत्वं (११) पित्तघ्नश्लेष्मलत्वं (१२) पित्तघ्नवातश्लेष्मलत्वं ( १३ ) पित्तघ्नवातोदासीनत्वं ( १४ ) पित्तघ्नश्लेष्मोदासीनत्वं ( १५ ) पित्तघ्नवातश्लेष्मोदासीनत्वं(१६)

पित्तप्रवातलश्लेष्मोदासीनत्वं ( १७ ) पित्तप्रश्लेष्मलवातोदासीनत्व ( १८ ) इति पित्तस्य; कफप्रमात्रत्वं ( १९ ) कफप्रवातलत्वं ( २० ) कफप्रपित्तलत्वं ( २१ ) कफप्रवातपित्तलत्वं ( २२ ) कफप्रवातोदासीनत्वं ( २३ ) कफप्रपित्तोदासीनत्व ( २४ ) कफप्रवातपित्तोदासीनत्वं ( २५ ) कफप्रवातलपित्तोदासीनत्वं (२६) कफप्रपित्तलवातोदासीनत्वं (२७) इति च कफस्य; अथ पवनादीनां संसर्गस्य हनने पृथक् त्रय इति संबंधः, अथशब्द एकैकव्यवच्छेदार्थः, एवं च वातपित्ते वातकफौ पित्तकफौ इति संसर्गस्य त्रैविध्यात्तस्य प्रत्येकं हनने पृथक् त्रय इति नव भेदाः; तथाहि–वातपित्तप्रत्व (२८) वातपित्तप्रश्लेष्मलत्व (२९) वातपित्तप्रश्लेष्मोदासीनत्वं (३०) वातश्लेष्मप्रत्वं ( ३१ ) वातश्लेष्मप्रपित्तलत्वं ( ३२ ) वातश्लेष्मप्रपित्तोदासीनत्वं (३३) कफपित्तप्रत्वं (३४) कफपित्तप्रवातलत्वं (३५) कफपित्तप्रवातोदासीनत्वं ( ३६ ); अथ पवनादीनां त्रिकस्य त्रयाणां समूहस्य हनने एकश्च कथित, यथा वातपित्तश्लेष्मप्रत्वं ( ३७ ); त्रयोदासीने त्रयस्योदासीनें नाशकत्वकारकत्वाभाव तत्रैकः स्याद्यथा–वातपित्तकफोदासीनत्वमिति (३८); अथ पवनादीनां एकैकशः एकैकस्य करणे कोपने प्रत्येकं पृथक् चतुर्मिताश्चतुस्संख्याः संभवन्ति, एते च द्वादश, तथाहि–वातलमात्रत्वं (३९) वातलपित्तोदासीनत्वं ( ४० ) वातलश्लेष्मोदासीनत्वं (४१) वातलपित्तश्लेष्मोदासीनत्वं (४२) पित्तलमात्रत्वं (४३) पित्तलवातोदासीनत्वं (४४) पित्तलश्लेष्मोदासीनत्वं (४५) पित्तलवातश्लेष्मोदासीनत्वं (४६) श्लेष्मलमात्रत्वं (४७) श्लेष्मलवातोदासीनत्व( ४८ ) श्लेष्मलपित्तोदासीनत्वं(४९ ) श्लेष्मलवातपित्तोदासीनत्वं(५०), अथ पवनादीनां द्वन्द्वस्य करणे प्रत्येकं द्वौ द्वौ पूर्ववत्, द्वन्द्वस्य त्रैविध्यात्षड्भेदाः, तथाहि–वातपित्तलत्व ( ५१ )

वातपित्तश्लेष्मोदासीनत्व (५२) वातश्लेष्मलत्वं (५३) वातश्लेष्मलपित्तोदासीनत्वं(५४)कफपित्तलत्व(५५) कफपित्तलवातोदासीनत्वं(५६), त्रिकस्य कारणे तु त्रिधुरेक इत्यर्थः, यथा वातपित्तश्लेष्मलत्वम् ( ५७ ) इति ॥ ३ ॥

यत्केवलं हन्त्यनिलं सपित्तं
कफान्वितं वा कफपित्तयुक्तम् ।
युतायुतौ पित्तकफौ स्वतंत्रौ
न हन्ति नो लाति च तच्चलघ्नम् ॥ ४ ॥

तद्यथा मोदकी तिन्दुः कार्पासी कोकिलाक्षकः ॥

तत्रोदाहरण वातघ्नमात्रत्वलक्षणमाह—यत्केवलमिति, केवल शुद्ध । सपित्त पित्तेन सह वर्तमानं, कफपित्तयुक्तमित्यत्र कफपित्ते मिलितेयुतौ परस्परं संसृष्टौ, अयुतौ असंसृष्टौ, युतौ च तावयुतौ च तादृशौ स्वतन्त्रौ प्रधानभूतौ नो हन्ति न करोतीति चलघ्न वातघ्नमात्रमित्यर्थ । सर्वेषां वाक्यानां साधारणत्वात्संसर्गिकत्वाच्छक्तिशक्तिमतोरभेदमाश्रित्य चलघ्नमिति निर्देश, एवमुत्तरत्रापि । अनिलस्य हननक्रियायाश्च केवलमित्यादिविशेषण, वाशब्दश्चाव्यवस्थितविकल्पे, तेन प्रधानयोर्वातपित्तयोः ससर्गे मोदक्यादे केवल वातहरत्वाभावापत्तिर्वातप्रपित्तोदासीनादिभिरसंकरश्च, तेषा पित्तादिसाहित्येन वातहरत्वाभावात्। स्वतन्त्रावित्युत्तर कफपित्तयोर्विशेषणात्सपित्तमित्यादिविशेषणत्रये पित्तादीन्यप्रधानानि । तेन युतावित्याद्युपादानेन च वातपित्तघ्नादिना त्रिदोषघ्नेन वा न सकर, तेषा प्रधानाप्रधानपित्तादिसाहित्येन वातघ्नत्वात् । वस्तुस्वरूपकथनमिदम् । अत प्रधानमात्रपित्तकफसहितासहितान्यनरवानहरत्वमित्येव लक्षण,

मात्रानन्तरं लक्षणे पित्तपदं कफपदं च क्रमाद्वातमपित्तलवात-मकफकरयोरतिप्रसङ्गवारणाय; असहितेति च केवलवातघ्ने मोदक्यादावव्याप्तिनिरासाय; अन्यतरपदं च वाते सहितत्वासहितत्वयोर्युगपद संभवात्तन्निरासायेति दिक् । एवमुत्तरलक्षणेऽपि विचारणीयम् । तदिति तच्चलघ्नमात्रम् । मोदकी गुडमंजरी । तिन्दुर्विरला । कार्पासी आच्छादनफला । कोकिलाक्ष इक्षुरकः । मोदक्यादि चाप्रधानव्यस्तसमस्तपित्तकफसहितं वातं तत्साहित्येन तथा प्रधानतत्साहित्येन तथा प्रधानसाहित्ये तदसाहित्येन शुद्धं च हन्तीति भवति वातघ्नमात्रम् । अहननक्रियां प्रति मोदक्यादेः कर्तृत्वं वातघ्नमात्रस्वरूपायास्तत्र च्छक्तेश्च करणत्वमिति भेदेऽपि पूर्ववदभेदमाश्रित्योदाहरणम् । एवमुत्तरत्रापि ॥ ४ ॥–

यच्छुद्धं सकफं वातं हन्ति पित्तं तु तादृशम्॥८॥
सनुते केवलकफं न हन्ति न करोति च ॥
वातघ्नपित्तलं तत्स्याद्यथाऽम्लो गोरसः स्मृतः॥९॥

वातघ्नपित्तलत्वादीनां क्रमेण लक्षणानि सोदाहरणान्याह-यच्छुद्धमिति। यत् शुद्धं सकफं,शुद्धं स कफं चेति पूर्ववदनिर्धारणं, वातस्य हन्तिक्रियायाश्च विशेषणं सकफमिति; अनेन चाप्रधानस्यापि पित्तस्य साहित्यं व्यवच्छिद्यते, अन्यथा वातघ्नपित्तलमिति समाख्याहानिः, प्रधानपित्तकरस्य प्रधानवातसाहित्येनाप्रधानपित्तहरत्वस्यासंभवाच्च तादृशं शुद्धं सकफमिति पूर्ववत् । अत्र वातसाहित्यव्यपदेशः केवलं वातपित्तासंसृष्टसकफमित्यत्राप्यातन्यमनीते. । स्वतन्त्रश्च तादृशः कफः अतएव न वातघ्नपित्तलश्लेष्मोदासीने संकरः,तस्य प्रधानाप्रधानकफोदासीनतया कफसाहित्येन वातघ्नपित्तकरत्वाभावात । यत्तु योपदेशस्य

सिद्धमन्त्रप्रकाशे ग्रन्थे—"वातघ्नमेव यद्द्रव्यं तद्वातं हन्ति केवलम् । सान्यं च केवलावन्यौ न हन्ति न करोति च ॥ १ ॥ वातघ्नमन्यजननं द्रव्यं यद्धन्ति तद्बलम् । केवलं केवलौ सान्यावन्यौ वर्धयते मलौ ॥२॥ वातघ्नमन्योदासीनं यत्तच्छुद्धाभिलापकम् । शुद्धौ सान्यौ न हन्त्यन्यौ न करोतीति सर्वतः ॥३॥ इति-श्लोकत्रयस्य व्याख्या-यत्केवलं वातं हन्ति केवलं सवातं च पित्तं करोति तद्वातघ्नपित्तलं,यत्केवलं वातं हन्ति केवलं सवातं वा पित्तं न हन्ति न करोति तद्वातघ्नपित्तोदासीनं; यत्केवलं वातं करोति, केवलं सवातं वा पित्तं न हन्ति न करोति तद्वातलपित्तोदासीनं; अनयैव दिशा वातघ्नश्लेष्मलादीनां लक्षणानि ज्ञेयानि" इति प्रतिपादितं; तदसत्, वातघ्नपित्तलादेर्वातघ्नपित्तलश्लेष्मोदासीनादिना संकरस्य दुर्वारत्वात्, अप्रधानवातादिसाहित्येन पित्तादिकरत्वे वातघ्नपित्तलादेर्वातघ्नत्वादिसमाख्याहानेश्च, प्रधानवातादिहरस्य प्रधानवातादिकरत्वे प्रमाणाभावाच्च । न च वातघ्नपित्तलादावुत्पलादिभदिक्रियाया ( ? ) प्राधान्यलक्षणात्तया तथालक्षणानीति वाच्यं, यत्केवलं पित्तं करोति केवलं सपित्तं च वातं हन्तीत्यादिलक्षणाना सुवचत्वाद्वातघ्नपित्तलादेर्वातपित्तलवातघ्नादिसंकीर्णभेदाधिक्यप्रसङ्गात् । न चेष्टापत्तिः, स्वयमेव भेदानां सप्तपञ्चाशत्त्वनिरूपणाच्चरकसुश्रुतखारणादिवचनानां क्वचित्पाठवैपरीत्येन विरोधापत्तेश्च । तथाहि—"चकोरदूषः श्यामाकः कषायो मधुरो लघु । वातल. कफपित्तघ्न"इति चरके पाठः;"श्यामाकहस्तिश्यामाकनीवाराणुप्रियङ्गवः । कषायमधुरा रूक्षा रक्तपित्तकफापहाः । अवृष्या लघव शीताः छेदना वातकोपना" इति खारणादिवचनेन पित्तकफापहा वातकोपना इति तद्वैपरीत्येन सहावस्थानविरोधाच्च श्यामाकादीनां नोभयरूपत्वाङ्गीकार इति अलं अतिवादेन । नचैवं पूर्वोक्तसिद्धमन्त्रीयवचनविरोधः,

तदर्थानवबोधात्। तथाहि—सान्यामिति वातस्य विशेषणमुत्तरश्लोकद्वये व्यावर्तते, सर्वत्र लक्षणवाक्येऽन्यशब्दश्च लक्षणसंज्ञानुसारेण प्रकृतहननादिक्रियाकर्मीभूतदोषाभिन्नदोषपरः, विशेषणे तु तादृशप्रधानदोषार्थक इति विशेषः। एवं च यत्केवलं सान्यं च वातं हन्ति सान्यं च पित्तं करोतीति वातप्रपित्तलस्य लक्षणे यथाश्रुतं सम्पन्नं; अत्र लक्ष्यस्य वातप्रपित्तलस्य संज्ञानुसारेण प्रकृतयोर्हननजननक्रिययोः कर्मीभूतौ दोषौ वातपित्ते इति तयोः सान्यमित्युभयत्र विशेषणे तद्भिन्नो दोषोऽप्रधानकफ एवान्यशब्देन गृह्यते, प्रधानकफं न हन्ति न करोतीति च परिशेषतो लभ्यते, एवं च यत्केवलं सहाप्रधानकफं च वातं च हन्ति तादृशं पित्तं च करोति प्रधानकफं न हन्ति न करोति इत्येव लक्षणं सम्पन्नं; अनयैव दिशा वातप्रपित्तोदासीनस्यापीति। सर्वत इत्यस्य तु तत्तद्दोषावापोद्वापाभ्यां तानि तानि लक्षणानि बोद्धव्यानीत्यर्थः। एवमस्मदुक्तलक्षणेष्वेव पर्यवसानमिति सर्वं सुस्थम्। अम्लगोरसोऽम्लतां यातं तक्रम् ॥ ५ ॥ ६ ॥—

शुद्धं सपित्तमनिलं हन्ति तादृग्विधं कफम् ॥
तनुते केवलं पित्तं न हन्ति न करोति च ॥७॥
तद्वातप्रश्लेष्मलं स्याद्यथोक्तं मधुरं दधि ॥

शुद्धमित्यादि पूर्ववद्व्याख्येयं; तादृग्विधं शुद्धं वा सपित्तं वा ॥ ७ ॥—

शुद्धं वातं हन्ति शुद्धकफपित्ते च लाति यत्॥८॥
तद्वातप्रश्लेष्मपित्तकृद्यथाऽम्लं परूपकम् ॥

शुद्धं वातमिति। लाति करोति,परूपकं "धन्वना कारहरितपत्रो धन्वाकृतिर्भवेत्। परूपकोऽल्पास्थिमृदुः पाकरक्तफलः स्मृतः"

'फालसा' 'फरुस'—इति भाषायां, परूषकस्य फलं फालिंग्रेति महाराष्ट्रभाषायामसिद्धं; तच्चाम्लमेव ॥ ८ ॥—

यच्छुद्धं सकफं वातं हन्ति पित्ते च तादृशे ॥९॥
उदास्ते तद्धि वातघ्नपित्तोदासीनमीरितम् ॥
अम्लतक्रेण सहिता यथा स्युर्लाजसक्तवः॥१०॥

यच्छुद्धमिति। तादृशे शुद्धे सकफे चेत्यर्थः। उदास्ते न हन्ति न करोतीत्यर्थः। सहिता आलोडिता इति यावत्। सिद्धमंत्रादावम्लतक्रस्य वातघ्नपित्तलवर्गे लाजसक्तूनां च वातपित्तघ्नवर्गे पाठात्तद्योगस्य वातहनने तुल्यशक्तित्वादुत्कृष्टत्वं, पित्तलत्वपित्तहरत्वशक्त्योस्तु परस्परं प्रतिबन्धात् औदासीन्यमेव सम्भवति यथा लकफपित्तघ्नक्षौद्रसहितस्य वातघ्नकफपित्तकरामदघ्नो दोषत्रय इव'अदोष दधि सक्षौद्रं' इत्युक्तेः। ननु प्रधानकफस्य नाशकता कारकता वाऽस्य न सम्भवति, नच वातश्लेष्मघ्नपित्तोदासीनेन वातघ्नश्लेष्मलपित्तोदासीनेन च संकरापत्त्यौदासीन्यं वाच्यं, तत्रापि वातघ्नकफपित्तोदासीनेन संकर इति चेत्? भ्रान्तोऽसि, सकफमिति विशेषणेनैव तन्निरासात्; तथाहि एतस्य वातसाहित्येनाप्रधानकफघ्नत्वं तस्य च प्रधानाप्रधानकफोदासीनतया तदभावः उपधेयसंकरेऽप्युपाधेरसंकराच्च। एवं वातघ्नश्लेष्मोदासीनादावपि बोद्धव्यम् ॥ ९ ॥ १० ॥

कफोदासीनवातघ्नं विज्ञेयमनया दिशा ॥
यथोष्णतोयकरभीक्षीराभ्यां पृथुका युताः॥११॥

कफेति अनया दिशा वातघ्नपित्तोदासीनलक्षणोक्तेन मार्गेण। एवं च शुद्धं सपित्तं वा वातं हन्ति शुद्धं सपित्तं वा कफं न हन्ति न करोतीति लक्षणमुक्तम्। करभी

उट्री, पृथुकाश्चिपिटकाः, उष्णोदकमुद्रीदुग्धं च वातश्लेष्महरं पृथुकाश्च वातप्रश्लेष्मला इति तद्योगे विरुद्धयोः श्लेष्मप्रत्वश्लेष्मकृत्त्वयोः परस्परमुपमर्दात्पूर्ववच्छ्लेष्मोदासीन्यम् ॥ ११ ॥

एवं वातहरापित्तकफं मुद्गजयूषवत् ॥

एवमिति यच्छुद्धं वातं हन्ति शुद्धौ पित्तकफौ च न हंति न करोतीत्यर्थः । अपित्तकफं पित्तकफोदासीनम् ।–

शुद्धं वातं हन्ति पित्तं तनुते यत्कफं न च ॥१२॥
वातघ्नपित्तकृच्छ्लेष्मोदासीनं तद्धि तैलवत् ॥

शुद्धमिति पित्तस्य कफस्य च विशेषणं; न चेति न हन्ति न वा तनुते तैलं तिलस्नेहः ॥१२॥—

एवं वातहरापित्तं कफकृत्पक्वचूनवत् ॥ १३ ॥

एवमिति शुद्धं वातं हन्ति शुद्धश्च कफं तनुते शुद्धं पित्तं न हन्ति नवा करोतीत्यर्थः आपित्तं पित्तोदासीनं ॥ १३ ॥–

शुद्धं युतायुतमरुच्छ्लेष्मयुक्तं च हन्ति यत् ॥
पित्तं तादृक् तद्वयं तूदास्ते तात्पित्तकृद्यथा ॥१४॥
चंदनाद्यं

इदानीं पित्तप्रमात्रत्यादीन् लक्षयति–शुद्धमित्यादि। पुर्ययतादृगिति तादृग्युतायुतं यत्तपोर्मरुच्छ्लेष्मणोर्द्वयं तस्मिन्नुदास्ते, तम हन्ति न करोतीत्यर्थः । आदिशब्दात् कदल्यादि ॥ १४ ॥

अथो पित्तं शुद्धं श्लेष्मयुतं च यत् ॥
हन्ति वातं तथाधत्ते उदास्ते केवले कफे ॥१५॥
तात्पित्तघ्नानिलकरं यथामं पनसं स्मृतम्

अथो इति तथा श्लेष्मयुतं आधत्ते करोति । आमं पनसं अपक्वं पनसफलं ।

एवं पित्तघ्नकफकृद्यथा मध्यममालुकम् ॥१६॥

एवमिति यच्छुद्धं सवातं च पित्तं हन्ति, शुद्धं सवातं वा कफं च करोति, केवले वाते चोदास्ते इत्यर्थः, मध्यमं नातिकोमलं नातिजरठं च ॥ १६ ॥

पित्तजिद्वातकफकृत्तथा शृंगाटकं यथा ॥

पित्तजिदिति तथा वातकफासंसृष्टं पित्तं हन्ति पित्तासंसृष्टौ वातकफौ च करोति इति यावत् ॥–

यच्छुद्धं सकफं पित्तं हन्ति वाते तु तादृशे ॥१७॥
उदास्ते तत्पित्तहरं वातोदासीनकं मतम् ॥
तडागतोयल्ललिता यथा स्थूलाजसक्तवः ॥१८॥

यच्छुद्धमिति तादृशे शुद्धे सकफे च। तडागतोयं पित्तघ्नवातलं-लाजसक्तवश्च वातपित्तहरास्तयोगस्तु विरुद्धस्वरयोरन्योन्यमुपम-र्दाद्वातं न हन्ति न वा कुरुते इत्युदाहृतः ॥ १७ ॥ १८ ॥

एवं पित्तहरश्लेष्मोदासीनं बिम्बवत्तथा ॥

एवमिति शुद्धं सवातं पित्तं हन्ति, शुद्धे सवातश्लेष्मणि चो-दास्ते इत्यर्थः ॥–

पितघ्नामारुतकफं फल्गुवल्लक्षयेत्तथा ॥ १९ ॥

तथेति शुद्धं सपित्तं हन्ति, शुद्धवातकफयोश्चोदास्ते इत्यर्थः॥ अमारुतकफं वातकफोदासीनम्। फल्गु काकोदुम्बरिकाफलं॥१९॥

पित्तघ्नानिलकृच्छ्लेष्मोदासीनं कुन्तली यथा ॥

तथेति शुद्धं पित्तं हन्ति, शुद्धं वातं च करोति, शुद्धे कफे चो-दास्ते इत्यर्थः। कुंतली पंचपत्रो दीर्घपत्रः शाकविशेषः, चिर-पोटा इत्यर्थः ॥

तथा पित्तघ्नकफकृद्वातोदासीनकं यथा ॥२०॥
शृंगाटककशेरूणि क्षीरेण हविषापि वा ॥

तथेति शुद्धं पित्तं हन्ति, शुद्धं कफं न करोति, शुद्धे वाते चोदास्ते इति यावत् ।शृङ्गाटकमिति शृङ्गाटकं पित्तघ्नं वातकफकरं, क्षीरं च वातपित्तघ्नश्लेष्मलमिति पूर्ववद्योगो वातोदासीनः । एवं कशेरुहपुषोरपि ॥ २० ॥

व्यस्ताव्यस्तमरुत्पित्तयुक्तं शुद्धं च यत्कफम्॥२१
हन्ति तादृक् तद्द्वये तूदास्ते तत्कफहृद्यथा ॥
देवदाली

कफघ्नमात्रस्वार्दीह्लक्षयति–व्यस्तेति । व्यस्ते केवले, अव्यस्ते अन्योन्यं मिलिते,तादृशाभ्यां मरुत्पित्ताभ्यां युक्तं कफम्। चकारो वार्थे । तादृशयोर्व्यस्ताव्यस्तयोर्वातपित्तयोर्द्वयं तादृक् तद्द्वयं तस्मिन् ॥ २१ ॥

अथ यच्छुद्धं सपित्तं वा कफं हरेत ॥ २२ ॥
वातं धत्ते उदास्ते च पित्ते श्लेष्मघ्नवातकृत ।
हर्यादधि यथा

अथेति ।शुद्धं सपित्तमिति वातमित्यत्राप्यनुसज्ज्यते।धत्ते इत्यत्र परिशेषात् केवले प्रधाने चेति शेषः; तेन कफघ्नवातलपित्तोदासीनेन न संकरः ॥ २२ ॥—

तद्वच्छ्लेष्मघ्नं पित्तलं मतम् ॥ २३ ॥

क्षारवत्

तद्वदिति । यच्छुद्धं सवातं कफं हरति, शुद्धं सवातं पित्तं च करोति, केवले वाते चोदास्ते इत्यर्थः ॥२३॥–

कफहृद्वातपित्तकृत् सीधुवत्तथा ।

कफहृदिति । तथेति केवलकफहरं सत्कासंसृष्टवातपित्तकरम् । इक्षुरसकृतं मद्यं सीधुः ॥

शुद्धं सपित्तं यद्वातं कफं वाते च तादृशे ॥२४॥
उदास्ते तत्कफहरानिलोदासीनमीरितम् ॥
यथा स्मृतं स्निग्धसिद्धमूलकेन हर्यादधि॥२५॥

शुद्धमिति । सपित्तमित्यनेन कफमवातपित्तोदासीनाद्भेदः । तादृशे शुद्धसपित्ते । स्निग्धसिद्धं मूलकं वातघ्नं हर्यादधि च वातलं, उभयमपि कफघ्नमिति तद्योगः पूर्ववद्वाते उदास्ते ॥ २४ ॥ २५ ॥

एवं कफघ्नापित्तं च मेषीघृतवदीरितम् ॥

एवमिति यच्छुद्धसवातकफहरं सच्छुद्धसवातपित्ते उदास्ते तत् कफघ्नपित्तोदासीनमित्यर्थः ॥–

अरिष्टवत्तथा श्लेष्महरं पित्तमरुद्भवेत् ॥ २६ ॥

अरिष्टेति द्रव्याणि निष्क्वाथ्य कृतं मद्यमरिष्टं । तथा यच्छुद्धश्लेष्महरं सच्छुद्धपित्तवातोदासीनम् ॥ २६ ॥

एवं कफघ्नापित्तं स्यात् चलकृद्यावनालवत् ॥

एवमिति शुद्धकफहरं शुद्धवातकरं च सच्छुद्धपित्तोदासीनमित्यर्थः ।अपित्तं पित्तोदासीनम् । यावनालो जूर्णाह्व ॥–

तथा माधववज्ज्ञेयं श्लेष्मघ्नावातपित्तलम्॥२७॥

तथेति शुद्धकफहरं शुद्धपित्तकरं च सच्छुद्धवातोदासीनम् । माधवो मध्वासवः ॥ २७ ॥

केवले सकफे वा यद्वातपित्ते विनाशयेत् ॥
यच्चोदास्ते शुद्धकफे वातपित्तहरं च तत् ॥२८॥
शतावरीवत्

तथा पित्तघ्नकफकृद्वातोदासीनकं यथा ॥२०॥
शृंगाटककशेरूणि क्षीरेण हविषापि वा ॥

तथेति शुद्धं पित्तं हन्ति, शुद्धं कफं च करोति, शुद्धे वाते चोदास्ते इति यावत् ।शृङ्गाटकमिति शृङ्गाटकं पित्तघ्नं वातकफकरं, क्षीरं च वातपित्तघ्नश्लेष्मलमिति पूर्ववद्योगो वातोदासीनः । एवं कशेरुदृपुपोरपि ॥ २० ॥

व्यस्ताव्यस्तमरुत्पित्तयुक्तं शुद्धं च यत्कफम्॥२१
हन्ति तादृक् तद्द्वये तूदास्ते तत्कफहृद्यथा ॥
देवदाली

कफघ्नमात्रत्वादीलक्षयति—व्यस्तेति । व्यस्ते केवले, अव्यस्ते अन्योन्यं मिलिते,तादृशाभ्यां मरुत्पित्ताभ्यां युक्तं कफम् । चकारो वार्थे । तादृशयोर्व्यस्ताव्यस्तयोर्वातपित्तयोर्द्वयं तादृक् तद्द्वयं तस्मिन् ॥ २१ ॥

अथ यच्छुद्धं सपित्तं वा कफं हरेत ॥ २२ ॥
वातं धत्ते उदास्ते च पित्ते श्लेष्मघ्नवातकृत् ।
हयोदाधि यथा

अथेति ।शुद्धं सपित्तमिति वातमित्यत्राप्यनुसज्ज्यते।धत्ते इत्यत्र परिशेषात् केवले प्रधाने चेति ज्ञेयं; तेन कफघ्नवातकृत्पित्तोदासीनेन न संकरः ॥ २२ ॥—

तद्वच्छ्लेष्मघ्नं पित्तलं मतम् ॥ २३ ॥

क्षारवत्

तद्वदिति । यच्छुद्धं सवातं कफं हरति, शुद्धं सवातं पित्तं च करोति, केवले वाते चोदास्ते इत्यर्थः ॥२३॥—

कफहृद्वातपित्तकृत् सीधुवत्तथा ।

कफहृदिति । तथेति केवलकफहरं तत्कालसहृष्टवातपित्तकरम् । इक्षुरसकृतं मद्यं सीधुः ॥

शुद्धं सपित्ते यद्वातं कफं वाते च तादृशे ॥२४॥
उदास्ते तत्कफहरानिलोदासीनमीरितम् ॥
यथा स्मृतं स्निग्धसिद्धमूलकेन हयींदाधि॥२५॥

शुद्धमिति । सपित्तमित्यनेन कफघ्नवातपित्तोदासीनाद्भेदः । तादृशे शुद्धमपित्ते । स्निग्धसिद्धं मूलकं वातघ्नं हयींदधि च वातलं, उभयमपि कफघ्नमिति तयोः पूर्ववद्वाते उदास्ते ॥ २४ ॥ २५ ॥

एवं कफघ्नापित्तं च मेपीघृतवदीरितम् ॥

एवमिति यच्छुद्धसवातकफहरं सच्छुद्धसवातपित्ते उदास्ते तत् कफघ्नपित्तोदासीनमित्यर्थः ॥–

अरिष्टवत्तथा श्लेष्महरं पित्तमरुद्भवेत् ॥२६॥

अरिष्टेति द्रव्याणि निपूय्याम्य कृतं मद्यमरिष्टं । तथा मच्छु श्लेष्महरं सच्छुद्धपित्तवातोदासीनम् ॥ २६ ॥

एवं कफघ्नापित्तं स्यात् चलकृद्यावनालवत् ॥

एवमिति शुद्धकफहरं शुद्धवातकरं च सच्छुद्धपित्तोदासीनमित्यर्थः ।अपित्तं पित्तोदासीनम् । यावनालो जूर्णाह्व ॥–

•तथा माधववज्ज्ञेयं श्लेष्मघ्नावातपित्तलम्॥२७॥

तथेति शुद्धकफहरं शुद्धपित्तकरं च सच्छुद्धवातोदासीनम् । माधवो मध्वासवः ॥ २७ ॥

केवले सकफे वा यद्वातपित्ते विनाशयेत् ॥
यच्चोदास्ते शुद्धकफे वातपित्तहरं च तत् ॥२८॥
शतावरीवत्

वातपित्तप्रत्यादिलक्षणमाह-केवल इति । केवले कफरहिते; एतच्च विशेषणद्वयं अर्थतो वचनद्वयव्यत्ययेन वा क्रियाया अपि बोद्धव्यम् । वातपित्ते इत्यत्र विशेषानुक्ते पृथक् मिलिते वा प्रधानेऽप्रधाने वेति पूर्ववदनिर्धारणम् ॥ २८ ॥-

योगात्तच्छ्लेष्मलं वातपित्तहृत् ॥

काकोलीवत्

योगादिति श्लेष्माणं लाति करोति तादृशं, वातपित्ते हरति तादृशमिति व्युत्पत्तेरित्यर्थः । ज्ञेयमित्यध्याहारः । एवं च कफासंसृष्टवातपित्तहरं सत्तदसंसृष्टकफकरमिति लक्षणम् ॥-

मेथिकावच्चाकफं वातपित्तहृत् ॥ २९ ॥

मेथिकेति । चकारो योगादित्यनुकर्षणार्थः । तथाच कफासंसृष्टवातपित्तहरं सत्तदसंसृष्टकफोदासीनमिति लक्षणं निरुक्तं। अतएव न वातपित्तेन संकरः, तस्याप्रधानकफसाहित्येन वातपित्तघ्नत्वात् ॥ २९ ॥

पूर्वोक्तया दिशा वातकफघ्नं देवदारुवत् ॥

पूर्वोक्तयेति । वातपित्तहरलक्षणोक्तमार्गेणेत्यर्थः । शुद्धसपित्तवातकफहरत्वे सति शुद्धपित्तोदासीनमिति यावत् ॥-

पित्तलं वातकफहृद्गुर्वादिवदीरितम् ॥ ३० ॥

पित्तलमिति पूर्वोक्तया दिशेत्युत्तरोत्तरत्र अनुवर्तते । एवं च पित्तासंसृष्टवातकफहरत्वे सति तदसंसृष्टपित्तकरत्वं लक्षणम् ॥ ३० ॥

अपित्तं कफवातघ्नं बिल्वादिवदिहेष्यते ॥

अपित्तमिति पित्तासंसृष्टकफवातघ्नत्वे सति तदसंसृष्टपित्तोदासीनत्वं लक्षणम् ॥-

तथा पित्तकफघ्नं च पिप्पलीडुम्बरादिवत् ॥३१॥

तथेति शुद्धसवातपित्तकफहरं सत्केवलवातोदासीनमिति तथाशब्दार्थः ॥३१॥

कटुकावद्वातकरकफापित्तहरं तथा ॥

कटुकावदिति । तथेति वातासंसृष्टकफपित्तहरत्वे सति तद्संसृष्टवातकरमित्यर्थः॥–

कर्कोटवत्पित्तकफघ्नावातं च विभावयेत् ॥ ३२॥

कर्कोटवदिति। चेति वातासंसृष्टपित्तकफहरत्वे सति तदसंसृष्टवातोदासीनमित्यर्थः । कर्कोटं कर्कोटीफलम् ॥ ३२ ॥

अन्वर्थाख्यं त्रिदोषघ्नं गुडूच्यादिवदीरितम् ॥

अन्वर्थाख्यमिति संसृष्टासंसृष्टवातपित्तकफहरमिति भावः ॥–

सक्षौद्रदधिवद्दोषत्रयोदासीनकं तथा ॥ ३३ ॥

सक्षौद्रेति । तथा संसृष्टासंसृष्टदोषत्रयोदासीनमित्यन्वर्थाख्यम् ॥ ३३ ॥

सान्यं विशुद्धं च तनोति वातं
पृथग्युतौ वा कफपित्तदोषौ ॥
न हन्ति नो लाति च वातलं त-
त्कुल्मापवत्

वातलमात्रत्वादीक्षयति–सान्यमिति । अन्यौ केवलौ मिलितौ वा पित्तकफौ, ताभ्यां सहितमिति वातलस्य लातिक्रियायाश्च विशेषणम्। पृथग्वातासंसृष्टौ केवलौ च। युतौ अन्योन्यमिलितौ। वातममात्रलक्षणोक्तप्रकारेणात्र विचारोऽनुसन्धेयः। कुल्मापो-ऽशित्रं यवादि॥–

पित्तलमेवमादिशेत् ॥ ३४ ॥

यथा शमीजं फलमे-

वातपित्तघ्नत्वादिलक्षणमाह-केवल इति । केवले कफरहिते; एतच्च विशेषणद्वयं अर्थतो वचनद्वयव्यत्ययेन वा क्रियाया अपि बोद्धव्यम् । वातपित्ते इत्यत्र विशेषानुक्ते पृथङ् मिलिते वा प्रधानेऽप्रधाने वेति पूर्ववदनिर्धारणम् ॥ २८ ॥-

योगात्तच्छ्लेष्मलं वातपित्तहृत् ॥

काकोलीवत्

योगादिति श्लेष्माणं लाति करोति तादृशं, वातपित्ते हरति तादृशमिति व्युत्पत्तेरित्यर्थः । ज्ञेयमित्यध्याहारः । एवं च कफासंसृष्टवातपित्तहरं सत्तदसंसृष्टकफकरमिति लक्षणम् ॥-

मेथिकावच्चाकफं वातपित्तहृत् ॥ २९ ॥

मेथिकेति । चकारो योगादित्यनुकर्षणार्थः । तथाच कफासंसृष्टवातपित्तहरं सत्तदसंसृष्टकफोदासीनमिति लक्षणं निरुक्तं; अतएव न वातपित्तेन संकरः, तस्याप्रधानकफसाहित्येन वातपित्तघ्नत्वात् ॥ २९ ॥

पूर्वोक्तया दिशा वातकफघ्नं देवदार्खवत् ॥

पूर्वोक्तयेति । वातपित्तहरलक्षणोक्तमार्गेणेत्यर्थः । शुद्धसपित्तवातकफहरत्वे सति शुद्धपित्तोदासीनमिति यावत् ॥-

पित्तलं वातकफहृदगुर्वादिवदीरितम् ॥ ३० ॥

पित्तलमिति पूर्वोक्तया दिशेत्युत्तरोत्तरत्र अनुवर्तते । एवं च पित्तासंसृष्टवातकफहरत्वे सति तदसंसृष्टपित्तकरत्वं लक्षणम् ॥ ३० ॥

अपित्तं कफवातघ्नं बिल्वादिवदिहेष्यते ॥

अपित्तमिति पित्तासंसृष्टकफवातघ्नत्वे सति तदसंसृष्टपित्तोदासीनत्वं लक्षणम् ॥-

तथा पित्तकफघ्नं च पिप्पलोदुम्बरादिवत् ॥ ३१ ॥

अश्लेष्म इति दिशेत्यावर्तते । तेन केवलं वातकरं सद्वातामि-श्रपित्तकफोदासीनमिति निरुक्तम्।फाणितं पित्तकफकरं, सक्तवस्तु पित्तकफघ्ना, उभयेपि वातला इति तद्योग उदाहृतः ।—

विरूढभक्ष्याणि यथाम्लगोरसै-
रमारुतं पित्तकृदादिशेत्तथा ॥ ३७ ॥

विरूढ इति । वातासहितकफसहितपित्तकरं सपित्तासहितवातोदासीनमिति तथाशब्दार्थः । विरूढभक्ष्यं वातलं, अम्लतकं च वातघ्नमुभयमपि पित्तघ्नमित्यत्रोदाहृतम् ॥ ३७ ॥

चौण्ड्यम्बुवातपित्तलनिष्कफं चा-

चौण्डीति स्वय विशीर्णशिलाश्वभ्रं चौण्डी । उत्तरवाक्यस्थं पूर्ववदित्यत्रापि सम्बन्धनीयं; तेन कफरहितसवातशुद्धपित्तकरं सपित्तारहितकफोदासीनमिति लक्षणमुक्तम्॥—

श्लेष्मानिलं पित्तकरं च पूर्ववत् ॥
हिंग्वासुरीसर्षपतैलसिद्धः
शाको यथा सर्षपकुञ्जरादिः ॥ ३८ ॥

अश्लेष्मेति नञ् औदासीन्ये। पूर्ववदिति वातकफासहितपित्तकरं सपित्तासहितवातकफोदासीनमित्यर्थः । आसुरी राजिका । हिंग्वादिभिः सिद्धः संस्कृत इति यावत्। कुंजरः स्वनामप्रसिद्धः, आदिशब्देन शोणि.ादि। हिंग्वादीनि वातकफघ्नानि,सर्षपादीनां च शाकं वातकरं,उभयमपि पित्तकरमिति तद्योग उदाहृतः॥३८॥

स्वादुदध्ना च चीनाकं श्लेष्मलापवनं यथा ॥

स्वादिति चीनाकं दीर्घमण्डपवल्लीफलम् । तथेति वातासहितपित्तसहितासहितश्लेष्मकरत्वे सति कफासंसृष्टवातोदासीनमित्यर्थः स्वादु दधि वातघ्नं,चीनाकं तु वातलं,द्वयमपि श्लेष्मलमिति पूर्वन्-

संक्षेपार्थं वातलपित्तोदासीनान् विहायातिदेशेन पित्तलं श्लेष्मलं च लक्षयति पित्तलमिति । एवमिति · पित्तासंसृष्टकफवातोदासीनत्वे सति वातकफसंसृष्टासंसृष्टपित्तकरमित्यर्थ ॥३४॥

एवमुन्नयेच्छ्लेष्मावहं चार्द्रकणोपणादिवत् ॥

एवमुन्नयेदिति· कफामिश्रवातपित्तोदासीनं सद्वातपित्तसहितासहितकफकरमिति जानीयादित्यर्थः । आर्द्रकणोपणादि आर्द्रपिप्पली आर्द्रमरीचं च । आदिना कूलेचरादि ॥

सान्यं विशुद्धं च तनोति वातं
पित्तं च नो हन्ति न वा तनोति ॥ ३५ ॥
तद्वातलापित्तमपक्वकंटकी-
फलेन भक्ष्यास्तु विरूढजा यथा ॥

सान्यमिति सान्यं कफसहितं, तेन वातलपित्तकफोदासीनेन न संकरः। सान्यं विशुद्धमिति च पित्तमित्यत्रानुवर्तते। कंटकिफलं पनसं, तच्चापक्वं पित्तहरं, विरूढेभ्योऽङ्कुरितधान्येभ्यो जायन्ते तैः क्रियन्ते इति यावत्, ईदृशा भक्ष्यास्ते च पित्तकरास्तदुभयं च वातकरमिति तद्योगे पूर्ववत् पित्तोदासीन्यम् ॥३९॥—

दिशाऽनयाश्लेष्ममरुत्करं हयी-
दध्ना यथा सूप्यजशाकमीरितम् ॥३६॥

दिशेति पित्तसहितासहितवातकरत्वे सति तादृशकफे उदासीनमित्यर्थ । अश्लेष्म कफोदासीनम्।अश्वादधि श्लेष्मघ्नं, चणकादिशिम्बीधान्यरसशाकं च श्लेष्मलं, उभयमपि वातलमिति संयोगे पूर्ववत् कफोदासीनम् ॥ ३६ ॥

अश्लेष्मपित्तं चलकृच्च फाणिता-
प्लुतो यथा सक्तुचयः समीरितः ॥

त्रिदोषप्रादौ त्रयाणां प्राधान्यात्तथा विषयत्वाच्च भेदाधिक्य-शंकां निराकरोति–वातोदासीनेति । प्रभृतिशब्देन पित्तोदासीन-मात्रत्वादिग्रहणम् । ननु यत्पित्तकफसंसृष्टं वा वातं न हन्ति न करोति तद्वातोदासीनमात्रमिति लक्षयितुं शक्यत एव, वातप्रमात्र-द्रव्ययोगस्य परस्परशक्तिप्रतिबन्धाद्वातोदासीनमात्रत्वसम्भवो-पीत्याशंक्य तादृशद्रव्ययोगस्य पित्तकफयोः कारकत्वं नाश-कत्वमौदासीन्यं वेति विकल्प्य दूषयति–स्वरूपहानेरिति। स्वरूपस्य निरुक्तलक्षणस्य हानिप्रसंगात्तस्मात्तद्योगस्य पित्तादिकारक-त्वादौ वातोदासीनपित्तलत्वादिसम्भवः । विकल्पत्रये दूषणमिदं, पूर्वोक्तेभ्यो वातघ्नपित्तलादिभ्यो भेदभ्य- अभेदतः भेदाभावादिति दूषणान्तरम् ॥ ५० ॥

एषामेव विशेषास्तु तारतम्येम्यथामिदः (?)।
नाम्नैव सुग्रहा एता अनन्ताश्चेति नोदिताः॥५१

ननु वातप्रवरतमादिभेदास्तु सम्भवन्त्यत आह–एषामिति।एषां वातप्रमात्रादीनां, विशेषा अवान्तरभेदाःपाभिद्योभेदास्तर्हि(?)किमिति न लक्षितास्तत्राश्चेत्यत आह–नाम्नैवेति । नाम्ना वातप्रवरं वातप्रवरं इत्यादिसंज्ञया सुग्रहाः सुखेन ज्ञेया, अनन्ता असं-ख्याता इति हेतोर्नोदिता नोक्ताश्च ॥ ५१ ॥

भिषजां परितोषाय वातघ्नत्वादिनिर्णयः ॥
नारायणेन रचितो नागेशस्य प्रसादतः ॥५२॥

इति वातघ्नत्वादिनिर्णयः ।

प्रतिज्ञातोऽर्थं साकल्येन निरूपित इत्याह–भिषजामिति । नागेशस्य नागस्य शेषाख्यस्येश श्रीविष्णुः अथ च नागे-शाख्यो वदेष्टभ्राता आयुर्वेदाचार्यस्तस्य प्रसादतः ॥ ५२ ॥

इति वातघ्नत्वादिटीका समाप्ता ।

द्र्यत्वात् प्रधानत्वाद्वातादेः प्राधान्यात्तत्कर्महननकरणक्रियोरपि प्राधान्यमिति तेनैव व्यवहार इति भावः । प्राधान्यं च स्वस्वलिङ्गाभिव्यक्तस्वस्थानस्थाविरोधकत्वादिना ज्ञेयं । किंवत्पार्थिवतादिवत् पार्थिवस्य भावः पार्थिवता आदि शब्देनाप्यतादि परिग्रह, द्रव्यमात्रस्य पाञ्चभौतिकत्वेपि यत्र पृथ्वीभूतस्य प्राधान्यं तत्र यथा पार्थिवत्वव्यपदेशस्तथात्रेत्यर्थः ॥

संकरेऽप्युपधेयानामुपाधीनां न संकरः ॥

संकर इति । उपधेयानां लक्ष्याणां द्रव्याणां वातघ्नमात्रादीनां वातपित्तहननादिसंकरेऽप्युपाधीनां निरुक्तानां लक्षणानां न संकरस्तथा न दोष इति भावः॥—

सपित्तवातहरणाहरणाभ्यां पृथङ्मतौ ॥४७॥
वातघ्नमात्रवातघ्नपित्तोदासीनसंज्ञकौ ॥
वातघ्नत्वादिष्वेकस्य प्रधानत्वमथद्वयोः ॥४८॥
वातपित्तहराद्येषु ततस्ते ते पृथङ्मताः ॥
दोषौ व्यस्तौ समस्तौ च हन्त्यादेर्विषयौ च यत् ॥

मन्दबुद्धिप्रतिपत्त्यर्थमेतदेव स्पष्टयति-सपित्तेति । हरणं चाहरणं च ते इति द्वन्द्वः, पश्चात् सपित्तवातस्य हरणाहरणे इति तत्पुरुषः । उपलक्षणमेचीत्पतमात्रादि वातघ्नकफोदासीनादीनाम् । वातघ्नत्वादिष्विति एकस्य एकस्य वातादेः प्रधानत्वादिति । द्वयोरित्यत्राप्यनुवर्तते। तथा पृथङ्मता इत्यन्वयः। व्यस्तौ केवलौ समस्तौ मिलितौ । हंत्यादेः क्रियायाः, आदिशब्देन कृतिग्रहणम्। द्वयोरिति दोषाविति च द्वित्वमविवक्षितम् ॥ ४७–४९ ॥

वातोदासीनमात्रत्वप्रभृतीनामसंभवः ॥
स्वरूपहानेः पूर्वोक्तभेदेभ्यो भेदतोपिवा ॥ ५० ॥